Sri - Vani - Vilas -
Sanskrit Series.

No. 1.

# Parvati Parinaya.

169





SRIRANGAM.
SRI VANI VILAS PRESS.
1906.

॥ श्रीः ॥

# ॥ पार्वतीपरिणयम् ॥

"अभिनवभट्टबाण शब्दतर्कालङ्कारविद्याभूषण" विरुदभाजा

वात्स्यचक्रवर्तिना श्रीकृष्णसूरिणा

विरचितया भूमिकया टिप्पण्याच

समुपेतम् ।



श्रीरङ्गनगरे

श्रीवाणीविलास मुद्रायन्त्रालये

सम्मुद्रितम् ।

१९०६.



# PREFACE.

The publication of this Sanskrit Series needs no justification. Several rare manuscripts of classical Sanskrit works are to be found scattered in the precious collections of many a Pandit and library in Southern India and even where the Mss. are of already published works, we find such excellent readings in them that we are perforce tempted to bring them out again with these better readings—readings, which by far improve the tone and significance of the originals. Readers of this edition of Pârvati Pariṇaya will observe the various differences in the readings and also note what vast improvements have been effected thereby. Thus the object of the publication of this series is not only to make public hitherto unpublished rare Sanskrit works but also to bring out in the best style possible, with all the readings of Southern India, several of the already published works.

The following are some of the works awaiting early publication in this Series.

1. Yâdavâbhyudaya of Vedânta Deșika with the commentary of Appayya Dikshita.
2. Șiva Gîtâ with the commentary of Parașivendra.
3. Lalitâ Sahasranâma with the commentary of Șrî Șankara Bhagavad Pâda Âcharya.
4. Vâsavadattâ with commentary.
5. Achyutarâyâbhyudaya.
6. The poetical works of Râmabhadra Dîkshita.

The critical Sanskrit Introduction in this book will be very useful reading, since it discusses the authorship of the drama and the date of the author. It clearly exposes the error of the popular belief that the renowned Bâṇa, the author of the famous masterpieces *viz.* Kâdambarî and Harshacharita, is the author of this drama also and adduces several arguments to conclude that Vâmana Bhaṭṭa Bâṇa who lived in the 15th Century A.D. is, in all probability, responsible for the composition of this drama. For further details, the reader is referred to the Introduction itself which is made purposely elaborate and flowing, in order to relieve the tediousness which is the inevitable concomitant of Historical Researches.

My thanks are due to Pandit Ṛ. V. Krishṇamâchârya for this fine Introduction and for the Malabar Mss. procured by him, as also to Mr. T. S. Kuppuswamy Sastrigal of Tanjore for his kindness in sending me the readings of the Tanjore Palace Mss.

The illustrations are likely to be much appreciated as adding largely to the beauty and the get-up of the Series.

SRIRANGAM, 
*20th April* 05.

*T. K. Balasubrahmanyam*



# भूमिका ।



इदं किल नाटकं केन कविना विरचितमिति, स च कविः कस्मिन् काले जीवति स्मेति, कीदृशश्चास्य रूपकस्य स्वारस्यमिति च सांप्रतमस्माभिर्विचार्यते । तत्र प्रथमन्तावदस्य नाटकस्य कर्ता कोऽसाविति विमृशामः । बहवः किल मन्यन्ते प्रकृतमिदं नाटकं श्रीमता प्राचा भट्टवाणेनैव— यः कादम्बर्यादीनां रचयिता— संग्रथितमिति । यतश्चास्य नाटकस्य प्रस्तावनायां "अस्ति कविसार्वभौमो वत्सान्वयजलधिकौस्तुभो वाणः । " इत्येवमुपलभ्यते । प्रसिद्धश्च भट्टवाणो वत्सान्वयसंभूत इति स्पष्टमेवेदं हर्षचरितमवलोक्यताम् । दृश्यते चात्र तत्कृतग्रन्थान्तरेण संवादः । यथा । "कुचयुगलं परिणद्धं यथा यथा वृद्धिमेति तन्वङ्ग्याः । वरचिन्ताहृतमनसस्तथा तथा कार्श्यमेति मे गात्रम् ॥ " इति पार्वतीपरिणयम् । "उद्वेगमहावर्ते पातयति पयोधरोन्नमनकाले । सरिदिव तटमनुवर्षं विवर्धमाना सुता पितरम् ॥" इति हर्षचरितम् । "सौभाग्यमयीव सालभञ्जिका सौन्दर्यदेवतेव विग्रहिणी " इत्यादिवाक्यशैल्यपि नियतमेकान्तत एव गद्यकविमनुस्मारयति प्राञ्चं भट्टबाणम् । प्रायेण प्रबन्धेषु परिदृश्यमानो ह्यर्थतश्शब्दतश्च परस्परसंवादस्समभिव्यनक्ति तेषामेकमेव कर्तारम् । तथा च कालिदासकृतिषु । "आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि । " इति मेघसन्देशः । "शक्यं खल्वाशा-

वन्धेनात्मानं धारयितुं" इति विक्रमोर्वशी। "गुरुअं वि विरहदुक्खं आसावन्धो सहावेदि।" इति शाकुन्तलम्। रीतिवृत्तिशय्यादिविसंवादस्तु न विघटयिष्यत्येककर्तृकताम्। तत्तद्रसव्यतिकरेण वर्णनीयार्थसंसर्गेण पौर्वापर्यपर्वणा च प्रवन्धान्तरेष्वन्येषामिव विभिद्यमानस्सोऽयमत्राप्युपपद्यत एव। नापि कश्चिदन्यः श्रूयते ज्ञायते वा वत्सान्वयजलधिकौस्तुभो वाणः। येन तावदेतन्नाटककर्तृपदं लम्भितेन निर्भरं सुस्था भविष्यामः। आतश्च विचार्यमाणे नियतमस्माभिरकामैरप्यगत्या समभ्युपगन्तव्यमेव प्रकृतनाटकस्य प्राचीनवाणकर्तृकत्वमिति तेषामभिसन्धिः। वयन्तु ब्रूमः। नेदं नाटकं प्राचो वाणभट्टस्य कृतिर्भवितुमर्हति। यदि च प्राचा वाणभट्टेन कृतमिदमभविष्यत् कथन्नाम तर्हि रूपकलक्षणनिरूपणप्रवृत्तेन केनापि नेदं कुत्रापि नामतो निरदेक्ष्यत। न खल्वादशरूपकमा च साहित्यदर्पणादन्यतमेऽपि लक्षणग्रन्थे गन्धोऽप्यस्य नाटकस्य समुपलभ्यते। किञ्च अन्येष्वप्यलङ्कारग्रन्थेषु न केनाप्यालङ्कारिकेण पद्यमेकं वाप्यस्मादुद्धृत्य रूपकादुदाहृतमस्ति। न हि प्रसिद्धभट्टवाणस्य एतत्कर्तृतायां, नामतोऽप्येतदनुदाहरणं कारणान्तरेण कथञ्चित्समर्थ्यमानमपि सहृदयसंवादमनुभवितुमर्हति। प्रवन्धान्तरसंवादस्तु समानकर्तृकत्व इव भिन्नकर्तृकत्वेऽपि भूयसा परिदृश्यत इति न खल्वसौ संवादः कस्यचित्साधको न वा बाधकः कस्यापि। किञ्च नात्र रूपके तावान् कथाघटनसंप्रदायः तावती वा रसपुष्टिः, तावद्वा वर्णनाचातुर्यमनुभूयते, यावता यावत्या यावता च तेन तया तेन च किंचिदास्वादविषयतामनुभाव्यमानमादरास्पदं भवति नाटकं। लभते च महाकविकृतिव्यपदेशप्रशंसाम्। यथाजातं

ह्यत्र नाटके वस्तुविन्यासादिविजृम्भणम् । कादम्बरीहर्षचरित-चण्डीशतकेषु तथा तथा स्वीयमसाधारणमालोकविसरमभिदर्शयता सुदूरगामिना प्राचो भट्टबाणस्य प्रातिभेन चक्षुषा— यदेकदैव रोदसी व्याप्नोति— परमस्मिन्नाटके निमीलितमिति हन्त सर्वथा विप्रतिपिद्धमिदं न केवलं विमर्शकः श्रद्धाजडोऽपि को हि नाम समभ्युपगच्छतु । भूयान् किल वर्णनाचमत्काररसचर्वणादिषु विसंवादः कादम्बर्यादीनामस्य च नाटकस्य । सुनिपुणं विमृश्यतां, येन च कादम्बर्यादीनि स्त्रीरत्नानि वर्णितानि तेनैव कविना वर्णिता पार्वतीति कथन्नाम युज्यते कथञ्चिदप्यभिधातुं । महत्किल तत्तादृगन्तरं । यन्महता प्रयासेनापि न शक्यत एव पौर्वापर्यपर्वादिभिरपह्नोतुम् । न ह्युद्भिदतश्शुष्यदुत्तरोत्तरमुपचीयते वीजमिति सांप्रतम् । परन्तु मन्यामहे श्रीमान् वामनभट्टवाण एव स्यादस्य कर्ता नाटकस्य । यः खलु वत्सवंशजातः अभिनवबाणविरुदधारी वीरनारायणचरिताख्यगद्यकाव्यस्य अन्येषाञ्च शब्दरत्नाकरनिघण्ट्वादीनां रचयिता । तथा च दृश्यते । यथा शब्दरत्नाकरनिघण्टुग्रन्थारम्भे । "सोमाङ्कमुत्तंसयते वामाङ्कमवरुन्धते । नमः परस्मै देवाय तेजोभिः पश्यते त्रिभिः । वरदाग्निचितः पौत्रः पुत्रः कोवटियज्वनः । जागर्ति वामनो बाणो वत्सवंशशिखामणिः ॥" इति । तथा चतुर्थाध्यायपरिसमाप्तौ "इति वत्सकुलवामनभट्टवाणविरचिते शब्दरत्नाकरे ऋष्यध्यायश्चतुर्थः ॥" इत्युपलभ्यते । "तेजोभिः पश्यते त्रिभिः" इत्यस्य प्रकृतनाटकस्थस्य "तेजस्त्रयेण महता विहितेक्षणश्रीः ।" इत्यस्य च दृश्यतां सहृदयैस्संवादः । तथा शृङ्गारभूषणाख्यभाणेऽपि "सौभाग्यस्य निधिश्श्रुतस्य वसतिर्विद्यावधूनां वरो

लक्ष्म्याः केळिगृहं प्रसूतिभवनं शीलस्य कीर्तेः पदं । निस्सामान्यविकासया कवितया जागर्ति वत्सान्वयश्श्रीमान्वामनभट्टबाणसुकविस्साहित्यचूडामणिः ॥" इति दृश्यते। वीरनारायणचरितेऽप्येवमस्ति । "प्रतिकविभेदनबाणः कवितातरुगहनविहरणमयूरः । सहृदयलोकसुबन्धुर्जयति श्रीभट्टबाणकविराजः। जयति कविभट्टबाणे दधति कविम्मन्यभावमन्येऽपि । प्रद्योतयति रवौ द्यां खद्योताख्या न किन्तु कीटमणेः । गाथास्ताथागता वो दधति वितथतां तार्किकास्तत्वविद्भिस्सत्रा सत्रासमाद्ध्वं फणिभणितिजुषो वः कृतं प्रक्रियाभिः । भग्ना साहित्यसीमा ········ भुवने वामने भट्टबाणे दीव्यत्यस्मिन्कवीन्द्रे जहित जहित भोः कद्वदा विद्वदास्थाम् । अयमभिनवबाणः काव्यमत्यद्भुतार्थं भुवनमहितभूमा नायको वेमभूपः। त्रिभुवनमहनीयख्यातिमानेष योगः .................... ॥ ········ नृपाणां दुर्मदपरिपन्थिशिखरिदम्भोळिः । सर्वज्ञचक्रवर्ती पेद्दकोमटिवेमभूपतिर्जयति ॥" इति । इत्थञ्च मन्यामहे अयमेव वत्सान्वयजलधिकौस्तुभो बाणः प्रकृतनाटकस्य कर्ता स्यादिति । प्राचस्तु भट्टबाणस्य नेयं कृतिरिति पुरस्तादेव परामृष्टम् । नाप्यस्माद्वामनबाणादन्यः कश्चिच्छ्रूयते बाणः । किञ्च न वयमन्यस्य पुनरश्रवणादेव बाणस्य प्रकृतनाटककर्तारं वामनबाणमभिनिवेशेन केवलमङ्गीकुर्मः । परन्तु प्रदर्शयिष्यमाणः पण्डितमणेः कस्यचिल्लेखैकदेशोऽपि परिबृंहयत्यस्माकमीदृशमाशयमित्येव तथा वदामः । सहृदयाः ! सांप्रतं केरळेषु मासस्य चतुः प्रचरन्ती नागरलिपिमुद्रिता विज्ञानचिन्तामणिनामिका संस्कृतपत्रिका इतश्च द्वाविंशतेर्वत्सरेभ्यः पूर्वमेकपत्रात्मिका केरळलिपिमुद्रिता मासिक-

पत्रिकात्वमवलम्ब्य प्रचरति स्म । तदा पण्डितमणिना रामपारशवनाम्ना केरळीयेन रसविमर्शविषयके कस्मिंश्चन लेखे प्रकटिते "अतो वामनाचार्यमहाकवेः कृतिषु राक्षसादिभ्यो रसोदर्कतया रसमण्डपशब्देन भूरिशो व्यवहारं प्राप्नवति पार्वतीपरिणय इति कविसंकेतेन कैश्चिदभिधीयमानेऽस्मिन्नाटके इहोदाहृतश्लोक इव तत्र तत्र नीरसत्वापत्तिः । तत्तत्प्रदेशस्थसाहित्यवाचस्पतिमिश्रोक्तिव्याकोपावसरश्च" इति लिखितमस्ति । अयञ्च लेखको रामपारशवः केरळेषु विख्यातः पण्डितोत्तंसो बहूनां ग्रन्थानां द्रष्टा रचयिता च सर्वविद्याविशारदो बहुषु राजस्थानेषु लब्धस्थितिरस्माकमसाधारणम्मित्रम् । मन्यामहे, तेन खलु साम्प्रतं स्मृतिमात्रसन्निहितेन विद्वन्मणिना संपादिते पुस्तके वामनकृतमित्येव लिखितं स्यात् । कथमन्यथा तथा लेखस्य कथञ्चिदप्यवसरो नाम । गच्छता च कालेन विश्वसिमः, वामनबाणमजानद्भिः प्राञ्चं परं बाणं स्मरद्भिरबहुदर्शिभिरनेकैरन्यथा परिकल्प्य वामनपदमपाकृतम् । तत एव च प्रावर्तत प्रकृतनाटकस्य प्राचीनबाणकर्तृकत्वप्रवादसंप्ररोह इति नेदं विमर्शकानामपि तिरोहितम् । विमर्शकाः, एवञ्च सति निपुणे निरूपणे नह्यस्य कर्ता रूपकस्य प्राचीनो भट्टबाणः । परन्तु वामनभट्टबाण एवेति सिद्धम् । सम्प्रत्ययं वामनभट्टबाणः कदा कस्मिन्देशे समुत्पन्न इति विमृशामः । इदं किल विमर्शकानामनुभवपुनरुक्तं । यत् प्राचीनपुण्यपुरुषकालनिरूपणाय पदमवतारयन्तो हन्त न किमपि तत्र स्पष्टं प्रमाणमुपलभमानाः केवलमभ्यूहपथेनैव सुदूरं संचरमाणा वास्तविकं विपरीतं वा कमपि कालं निर्धारयन्तो बहुधा क्लिश्नन्ति विमर्शका इति ।

तन्नात्र किमपि विशिष्य वक्तव्यमवशिष्यते । यद्वयमप्यत्र विषये पदं निक्षिपन्तः क्लिश्नीमो नाम । अनुस्यूतं खल्विदमखिलेष्वपि पूर्वपुण्यपुरुषेष्वस्मदीयं दौर्भाग्यम् ।

अहो कति कतिवा नासन् तत्तन्महापुरुषाणां समकालिका वश्यवचसः। कुतो नु खल्विदमेतेषामत्र विषये परमौदासीन्यम् ? यन्महनीयमहिम्नां साक्षात्कृतशब्दब्रह्मणामपूर्वदर्शनानां सुगृहीतनाम्नां महापुरुषाणामद्भुतमसाधारणमतिशयितमखिलोपकारकमभिवीक्ष्यापि दैनन्दिनं चरितमात्मना वश्यवाग्भिरपि तादात्विकैः कविभिर्लेशतोऽप्यनुट्टङ्कयद्भिर्हन्त हन्त मूकैरिव जडैरिव स्तब्धैरिव तूष्णीमासितम् । न चापि तेऽपि महात्मानः पुण्यपुरुषाश्चिरस्य मार्गप्रदर्शकमात्मचरितमुपनिबद्ध्य स्वयं वा लोकस्य प्रसीदन्ति स्म। अहो वयमनुशोचामस्सुतरामस्मदीयं भाग्यविपर्ययम् । येन वयमेवंभूतास्स्मः ।

सम्प्रति ह्यत्र कर्मणि प्रयस्यन्तः केचिदाङ्गलमहाशयास्सानुमानं सप्रमाणमप्रमाणं वा सहेतु सहेत्वाभासं वा किमपि सिद्धान्तयन्तो नूनमस्माकमुपकुर्वन्तीति यद्यपि सर्वविदितमिदम् । तदपि न वयमेकान्ततस्तेषां वचसि विस्रम्भं जातुचिदपि वहामः । अस्त्येव नूनमस्माकमपि तेषु मार्गप्रदर्शका इति महती सम्भावना । अथापि ते किल चिरस्य पुरातनानस्मत्पुण्यपुरुषान् , न जानीमः केन फलेन, आसन्नप्राये समये हठादाकृष्य पातयन्तीति महदिदमस्माकं— यदि स्यादभिमानः— शिरश्शूलमुत्कोपयति। इदंकिल स्यात् , मन्यामहे, तत्र निगूढं रहस्यं। यच्चिरायैव पुरा भारतमिदमासीदभिवृद्धमनुविद्धं च नागरिकवृत्त्येत्येतदंशतोऽपि तेषां सुसहं न भवति ।

यच्च तेषां सर्वापीयं भारतस्य परिष्कारसम्पत्तिस्समुपजाता यवन-देशप्रभाप्रसरेणेत्यवश्यकथनीयमापतति । हन्त नास्ति खल्वसाध्यं नाम भगवतः परगुणासहनस्य । तद्धि विद्वांसमपि विमर्शक-मपि सुदूरमाकृष्य न किञ्चिन्न कारयति । अथवा किमिति वयमन्यानाक्षिपामः । वञ्चितो ह्यस्माकमीदृशो भागधेयमहिमा यत्सत्यमस्मदीयैरेव । यतो वयमत्र परमुखप्रतीक्षिणः कृतास्स्मः ।

इत्थंभूतेऽपि व्यतिकरे द्वित्राः पुनरात्मचरितमप्यात्मनैव लेशतस्समसूत्रयन्निति चिरस्य तेषु कृतज्ञतां वहामः । अथवा सति निपुणे निरूपणे, विश्वसिमः, न ते पुनरस्माकमुपालम्भमर्ह-न्ति । येषां किल पश्यतामुत्क्षेप्रया वर्णनीयवस्तूनि सङ्कटमम्वरतलम्, लिखतां सरसानि पदान्यविस्तीर्णं महीमण्डलम्, गणयतां वर्ण्यगु-णानल्पीयसी संख्या, शृण्वतां वर्णनामवहुभाषिणी सरस्वती, ध्यायतां रसपरिपोषं ह्रसीयान् कालो हृदयस्यापतति । येषां च प्रातिभं चक्षुः परोक्षमप्यद्ध्यक्षयति, सदयं च येषां मानसं सर्वा-त्मना विरसमपि वस्तुजातमात्मकाव्यमारोप्य यत्सत्यमेकान्तत एव सरसयति । ते पुनर्महामतयः पूर्वपुरुषाः कथन्नाम निर्वन्ध-वहुळमात्मनः परस्य वा चरितमभिलिखन्तु । कथं च वा तेषा-माकाशमन्यच्च युगपदेव व्याप्नुवत्प्रातिभं ज्योतिरल पुनरात्मनः प्रभाप्रसरं प्रकाशयतु । अभाजनं हि तादृशस्य भागधेयस्य मह-तीयमीदृशी नियन्त्रणा । मन्यामहे महदेव नियन्त्रणानिरयदुःख-मनुवभूव श्रीमानात्मचरितमभिलिखन् भट्टवाणः ।

अहो वयमतिदूरमाकृष्टास्स्मः पूर्वपुरुषपुण्यसंरम्भेण । दृष्ट-मिदानीमन्तःकरणापहारिणः पूर्वपुरुषमहिमकथारसस्य निपुणमाक्षे-

पसामर्थ्यम्। यन्निरूपयितुं प्रवृत्तास्मः, तदेव तावदालोचयितुमभिवाञ्छामः। एतत्कृते हि वीरनारायणचरिते विमृश्यमाने ज्ञायते आसीदयं कविस्त्रिलिङ्गदेशे जातस्तत्र अद्दङ्किनामनगर्यधिपतेश्श्रीवेमभूपालस्य प्रीतिपात्रमिति। तथा च वीरनारायणचरितम्॥"...... कामाभिधानो नराधिपः। तेन खलु कामपालनिभेन कामभूपालेन पालितस्समधिककृष्णागोदावरीस्रोतस्समुदायनदीमातृकायमाण स्त्रिलिङ्गो नाम जनपदः। यत्रास्ति अद्दङ्किनामधेया नगरी। तस्यां पुरि निवसन् पुरन्दरप्रतिमः पूरितार्थिजनकामः कामनृपतिरेकनगरीनिर्विशेषमशिषदशेषमवनिचक्रम्। तस्मात्प्रससार महीतले महान्वंशः। तत्र च माळवकुलापमृत्युर्गूर्जरज्वरः सिन्धुराजराजयक्ष्मा वङ्कहृदयशङ्कू राजा प्रोल्लभूपतिर्नाम। तस्माच्च भुवनमहितकीर्त्तेः प्रोलभूपालादजायन्तमाचनरेन्द्र इति वेमभूप इति दोड्डनरपतिरिति अन्नभूप इति मल्लमहीपाल इति पञ्च कुमाराः। तेषामादिमः भुजेन भूषणमिव भुवनभारमुद्वहन् वन्द्यो बभूव। माचभूपालः। यस्य पुनरनुजो वेमभूपालस्सर्वमुर्वीतलमजैषीत्। येन खलु विरचितेन श्रीशैलशिखरतः पाताळगङ्गावतरणसोपानपथेन यत्नाद्दते ... अन्तरेण तपांसि जनानां शिवपुरप्रयाणपथेनेव .......... । तस्य च माचभूपतेरजानिषताग्नय इवासह्यतेजसः रड्डिप्रोत इति कोमटीन्द्र इति नागरेन्द्र इति त्रिदशसदृशास्त्रयोनन्दनाः। ततः क्रमेण गुणज्येष्ठो विशेषतः पालयिता बभूव धरण्याः पेद्दकोमटीन्द्र इति राजराजप्रभावो राजा। तस्याभूदनन्ताम्बा नाम महिषी। स बहूनि दिनानि सुतमुखालोकनसुखस्य दूरे बभूव। ततो वेमभूपनामानं सुतमसूत सा देवी। ततः पञ्चमं वर्षमवतरति कुमारे भूयोऽपि देवी गर्भे देवकीव पुण्डरीकाक्षमधत्त माचभूपालं द्वितीयं कुमारम्।

पृथ्वीपतिस्सार्वभौमः पेद्दकोमटीन्द्रोऽपि अखिलभुवनभारभरणशिक्षितमालोक्य तस्मिन्नेवासस्ज धुरं धरण्याः।" इति। पेद्दकोमटीन्द्रसूनोरस्यैव वेमभूपतेः वीरनारायण इत्यपरं नामधेयम्। यत एव तच्चरितमधिकृत्य कृतस्य वामनबाणगद्यकाव्यस्य वीरनारायणचरितमिति विख्यातिः। तथा च अमरुकशतकव्याख्यावसाने "इति श्रीवीरनारायणसकलविद्याविशारदपेद्दकोमटिवेमभूपालविरचिता शृङ्गारदीपिकाख्या व्याख्या समाप्ता।" इति दृश्यते। वीरनारायण इत्यपराभिधानस्य च वेमभूपालस्य समये निर्णीते, भविष्यति निश्चितः प्रकृतकवेरपि जीवितकाल इति तत्र किञ्चिद्ब्रूमः। तत्र वेमभूपालसमयपर्यालोचनायाः पूर्वं अमरुकव्याख्यावीरनारायणचरितताम्रशासनादिभिरवगम्यमानं तद्वंशक्रममधस्ताद्वल्लीभङ्ग्या प्रदर्शयामः। येन दर्शितेन श्रीमतो वेमभूपतेस्तदाश्रितस्य वामनबाणस्य च समयनिर्णयस्सुकरो भविष्यति।



एवं वंशवल्लीसमुल्लेखे प्रमाणानि निरूपयामः । अमरुकव्याख्यायां—

"राज्यं वेमस्स चिरमकरोत्प्राज्यहेमाद्रिदानो
भूमीदेवैर्भुवमुरुभुजो भुक्तशेषामभुङ्क्त ।
श्रीशैलागात्प्रभवति पथि प्राप्तपाताळगङ्गा-
सोपानानि प्रथमपदवीमारुरुक्षुश्चकार ॥
माचक्षोणिपतिर्महेन्द्रविभवो वेमक्षितीशाग्रजो
हेमाद्रेस्सदृशो बभूव स गुणैस्तस्य त्रयो नन्दनाः ।
कीर्त्या जाग्रति रेडि (ड्डि) पोतनृपतिः श्रीकोमटीन्द्रस्ततो
नागक्ष्मापतिरित्युपात्तवपुषो धर्मार्थकामा इव ॥
वेमाधिपो माचविभुश्च नन्दनौ श्रीकोमटीन्द्रस्य गुणैकसंश्रयौ ।
भूलोकमेकोदरजन्मवाञ्छया भूयोऽवतीर्णाविव रामलक्ष्मणौ ॥
स वेमभूपस्सकलासु विद्यास्वतिप्रगल्भो जगनॆव्वगण्डः ।
कदाचिदास्थानगतः कवीनाम् काव्यामृतास्वादनतत्परोऽभूत् ॥
अमरुककविना रचितां शृङ्गाररसात्मिकां शतश्लोकीम् ।
श्रुत्वा विकसितचेतास्तदभिप्रायं प्रकाशतां नेतुम् ॥
मूलश्लोकान् समाहृत्य प्रक्षिप्तान्परिहृत्य च ।
विधत्ते विदुषामिष्टां टीकां शृङ्गारदीपिकाम् ॥"

इत्यस्ति । यथा च वीरनारायणचरिते तथा पूर्वं प्रदर्शितमेव ॥

श्रीकुमारगिरिभूपामात्यश्रीकाटयवेमभूपतिधर्मपत्नीमल्लांबिकाकारितमार्कण्डेयशिवालयाग्रहारप्रशस्तिप्रतिपादकेषु ताम्रपत्रेषु एवं लिखितमस्ति ॥

---

१. तेषां विरुदनामेति भाति ।

पुंसस्तस्य पुरातनस्य चरणाम्भोजातजातं कुलं
स्वल्पाचारविधानतोऽपि विमलं शुद्धस्वभावादिदम् ।
आसीत्किञ्च कलौ युगे नृपतयः प्रायेण यत्रोदिताः
तेजश्शौर्यपराक्रमप्रभृतिभिर्युक्ता गुणैः प्राभवन् ॥
तत्र पण्टकुलं नाम प्रभूतं बहुशाखिनि ।
तराविव फलं रम्यवृत्तं सरसमुज्ज्वलम् ॥
तत्रासीद्वेमभूपालः कुले विबुधरञ्जकः ।
पयोधाविव सन्तानो राजरत्नोद्भवाकरे ॥
श्रीमान्वेममहीपतिः स विदधे पाताळगंगातटे
श्रीशैले जगनोब्बगण्डविरुदस्सोपानवीथीं शुभाम्[१] ।
यासौ दीव्यति दिव्यसोमनगरारोहोद्यतानांनृणां
निश्रेणिः परिकल्पितेव नितरामाब्रह्मकल्पस्थिरा ॥
..............................

अनवोतप्रभुस्तस्मादजायतभुजायतः ॥
महासेनो महादेवादिवारातिकुलान्तकः ।
.............................. ॥
कुमारगिरिभूपोऽभूदनवोतविभोस्सुतः ।
.... .... .... .... .... .... .... ॥
आसीदमात्यरत्नं काटयवेमप्रभुस्तस्य ।
..................... ॥
अभूत् काटयवेमस्य जाया मल्लाम्बिका सती ।
अशेषगुणसंपूर्णा पातिव्रत्यधुरन्धरा ॥

---

१. एपि ग्राफिका इण्डिका— ४. ३२१—३२५.

राजद्राजमहेन्द्रनामनगरे गोदावरीतीरगं
मार्कण्डेयशिवालयं पतिहिता मल्लाम्बिका धार्मिका ।
कृत्वा शुद्धसुवर्णरत्नखचितं ब्रह्मप्रतिष्ठास्तथा
सत्राण्यध्वनि च प्रपा विजयतेऽनेकांस्तटाकानपि ॥
श्रीशाके गुणरामविश्वगणिते कार्तिक्यहेऽब्दे खरे
प्रादात्काटयवेमयस्स्ववनितामल्लाम्बिका नामतः ॥
ग्रामं मल्लवरं नृसिंहविदुषे काण्वद्विजायादरा-
दाचन्द्रार्कमुदर्कलालसमतिः सैश्वर्यभोगाष्टकम् । " इति ।

एनेन हि ताम्रशासनेन यथा वीरनारायणवेमः पोलनृपते-स्तथा कुमारगिरिराजोऽपि प्रपौत्रस्तस्येति ज्ञायत इति प्रायेण तयोस्समकालिकत्वमुत वा तुल्यशताब्दकत्वं न खल्वसंभाव्यम् । सति चैवं कुमारगिरिराजमन्त्रिवरकाटयवेमपत्न्या मल्लाम्बिकाया-स्ताम्रशासने योऽयमुल्लिखितः कालः, मन्यामहे न खल्विदमनु-पपन्नम्, स एव किञ्चिन्न्यूनाधिकभावेन वीरनारायणवेमस्यापि ( यः किल वामनबाणभट्टेन वर्णितः ) समयः । प्रकृतताम्रपत्र-शासने च "गुणरामविश्व" गणिते शाके इत्यस्ति । तस्य च संख्या १३३३. इति भवति । शकश्चायं शालीवाहनस्य । ननु औत्तराहेष्विव दाक्षिणात्येषु भूयसा अव्यवह्रियमाणो विक्रमा-र्कस्य । शालीवाहनशकेन च अष्टासप्ततौ ( ७८ ) संवत्सरेषु सङ्कलितेषु क्रिस्तीयाब्दपूर्तिरिति तथा क्रियमाणे प्रकृतस्य ताम्रशा-सनस्य समयः क्रिस्तीयवर्षेषु ( १३३३+ ७८= १४११.) पञ्च-दशशताब्द्याः पूर्वार्द्धेऽप्यादिमो भाग इति सिद्ध्यति । अयमेव च समयः कियतापि भेदेन स्यात् कुमारगिरिराजस्य वीरनारा-

यणवेमस्य एतदाश्रितस्य वामनवाणस्यापीति संभाव्यते ।

इदञ्चान्यत्ताम्रशासनद्वयम् । यच्छ्रीप्रोलभूपतेः पौत्रस्य श्रीमदन्नवेमनृपतेः । तयोरेकमेवम् ।

"[1]... ............................... ।

तस्मिन्नभूदिन्दुरिवाम्बुराशौ प्रोलक्षितीशो जगदेकपालः ॥

............................................. ।

तस्य पुण्योदयाज्जातः सुपुत्रः प्रोलभूपतेः ।

वेमावनीश्वरो नाम पुण्यश्लोको नृपाग्रणीः ॥

.................................. ।

सोपानानि विधाय वेमनृपतिः पातालगङ्गापथे

स्तम्भत्वं निजधर्मशासनविधेः श्रीशैलमेवानयत् ।

............................... ॥

आसीदप्रतिमप्रतापमहिमा हेमाद्रिदानव्रती

वीरश्रीपतिरन्नपोतनृपतिर्वेमक्षितीशात्मजः ।

.................................. ॥

तस्यानुजन्मा जगनोब्बगण्डः कीर्तिप्रियो भूपतिरन्नवेमः ।

... ... ... ... ... ... ... ... ... ... ॥

शाकाब्दे गगनाभ्रविश्व (१२७०) गणिते सिद्धार्थिसंवत्सरे

माघे कृष्णचतुर्दशीशिवतिथौ वीरान्नवेमप्रभुः ।

प्रादादिम्मडिलङ्कसंज्ञमतुलं कृत्वाग्रहारोत्तमं

ग्रामं लोहितगोत्रजाय विदुषे श्री इम्मडीन्द्राय सः ॥

नीतो मन्त्रीश्वरो विद्यागोष्ठीषु विबुधाग्रणीः ।

मित्रं हितोपदेशेषु भूभुजामिम्मडीश्वरः ॥" इति ॥

---

१. एपिग्राफिका इण्डिका— ३ — ६० — ६३

अत्रत्यशकवर्षेषु च अष्टासप्ततिसंवत्सरैस्सङ्कलितेषु सत्सु (१३७०+७८=१४४८) क्रिस्तीयशताब्दीषु पञ्चदशशताब्द्याः पूर्वार्द्धस्यावसानसमयः प्रोलपौत्रश्रीमदन्नवेमशासनपत्रस्य काल इति, शाखान्तरेण प्रोलभूपतिप्रपौत्रस्य वीरनारायणवेमस्य तदाश्रितस्य वामनबाणस्य च समयः पूर्वप्रदर्शितताम्रशासनेन संभावित एव दृढीकृतो भवत्यनेन शासनेन । इदमन्यच्छासनपत्रं ।

" .... .... .... .... .... .... .... ।

अभूत्तस्यां जातौ गुणगणनिधिः प्रोलनृपतिः .... .... ।

तस्माज्जज्ञे वेमभूपः प्रतापी ... ... ।

मेरुमन्दरकैलासानारुरुक्षुर्महामतिः ।

सोपानपङ्क्तिं श्रीशैले व्यतनोद्वेमभूपतिः ।

तस्य शासितुरुभौ बभूवतू रामलक्ष्मणनिभौ तनूभवौ ।

अन्नवोतनृपतिः प्रतापवानन्नवेमनृपतिश्च जित्वरः ।

पितुरनन्तरमग्र्यगुणोऽग्रजस्समधिगत्य स राज्यमकण्टकम् ।

वसुमतीमखिलां परिपालयन् सुचरितैः समचेष्ट महद्यशः ।

.... .... .... .... .... ।

तदनन्तरमन्नवेमभूपः पितृसिंहासनमुन्नतोऽधिरूढः ।

... ... ... ... ... ... ॥

तस्यान्नवेमचन्द्रस्य लक्ष्मीरिव सहोदरी ।

श्रीनल्लनूङ्कभूपस्य महिषी विष्णुतेजसः ।

वेमसानीति विख्याता सप्तसन्तानशालिनी ।

नित्यं हेमाद्रिकल्पोक्तदानव्रतविधायिनी ।

१. एपिग्राफिका इण्डिका—३—२८८—२९१.

शाकाब्दे रसरत्नभानु (१२९६)गणिते ग्रस्तोविधौ राहुणा
कार्तिक्यां विजयेश्वरस्य पुरतः श्रीगौतमीरोधसि ।
विप्रेभ्यः परमन्नवेमनृपतिः श्रीवेमसान्यास्स्वसुः
पुण्यार्थं नडुपूरसंज्ञमददाद् ग्रामं स कोणस्थले ॥
साष्टैश्वर्यं साष्टभोगं दत्तो विंशतिभागवान् ।
तस्या नाम्नाग्रहारोऽयं भाति वेमपुराह्वयः ॥" इति ।

अस्य च ताम्रशासनस्य समयः पूर्वोक्तरीत्या क्रिस्तीयशताब्दीषु (१२९६+७८=१३७४) चतुर्दशशताब्द्या उत्तरार्धस्य मध्यमकाल इति सिद्ध्यति । इत्थञ्च समुच्चित्य सर्वेषां कृते विमर्शे श्रीवीरनारायणस्य तदाश्रितस्य वामनबाणस्य च समयः चतुर्दशशताब्द्या उत्तरभागः पञ्चदशशताब्द्याः पूर्वार्धं वा स्यादिति युज्यते वक्तुम् । किञ्च—

"विद्यारण्यगुरून् सार्वभौमाद्यखिलसत्कवीन् ।
नमस्कृत्याथ बाणेन क्रियते शब्दचन्द्रिका ॥
स्वर्गे सारस्वतपुरी भोगभूमिस्तु सैरिकः ।
गीर्वाणनगरी वीरसाधारणपुरीति च ॥" इति ।

शब्दचन्द्रिकारम्भपद्येन विद्यारण्यशिष्यः कश्चिद्बाण आसीदिति ज्ञायते । संभाव्यते सोऽप्ययमेव स्यादिति । यतः तुर्याश्रमे विद्यारण्यनामभाजा श्रीसायणमाधवाचार्येण श्रीविजयनगरमहाराजमन्त्रिणैव सता गृहस्थाश्रमो यापितः । विजयनगरञ्च वेमभूपालनगरीसन्निहितमिति स्पष्टमेव । "तस्य पुनरचिन्तनीयमनवधिकानन्दसुन्दरमनादिनिधनमनञ्जनमगुणमक्रियमात्मानमबाह्येन चक्षुषा साक्षात्कुर्वतः समुपसंहृताखिलद्वैतकल्पनाविकल्पस्य" इति विलख-

नमपि नियतमद्वैताचार्यस्य विद्यारण्यगुरोश्शिष्यतामेतत्कवेस्सूचयतीवेत्यत्र सहृदयानां हृदय एव तिष्ठामहे। श्रीसायणमाधवाचार्यस्य समयश्च ताम्रशासनादिभिः ज्ञायते चतुर्दशशताब्द्या अन्तिमभागः पञ्चदशशताब्द्या आदिमो भागो वेति । सहृदयाः, यद्ययमेव वाणः श्रीविद्यारण्यगुरूणां शिष्यस्स्यात्, तर्हि निश्चितपूर्वस्तस्य समय एनेनापि द्वारान्तरेण भवति दृढीकृतः। विमर्शकाः, न जानीमः कियन्ति नाम स्खलितान्यस्माकमापतितान्यस्मिन्विमर्शे । परन्तु यावत्प्रमाणलाभं यथामतिवैभवमालोचितं सुदूरमस्माभिः । इतःपरमस्य विमर्शस्य साधुत्वासाधुत्वयोः श्रीमतां बहुग्रन्थपरिशीलनप्राप्तमहिमा समालोचनैव परमं प्रमाणमस्माकम्। महाशयाः, एतावता च प्रकृतनाटकस्य कोऽसौ कर्तेति कश्च तस्य समय इति च समालोचितमस्माभिः । साम्प्रतं प्रकृतं नाटकमधिकृत्य किञ्चिद्वदामः ।

इदं हि रूपकं भूयसा शिवपुराणस्थपार्वतीपरिणयकथां प्रमाणीकृत्य निर्मितम्। यामेव कविसार्वभौमः कालिदासोऽप्यनुसृत्य कुमारसंभवं नाम महाकाव्यं प्रणिनाय । यथा हि कालिदासश्शिवपुराणमर्थतश्शब्दतश्चानुगच्छति[3], एवमयमपि वाणकविश्शिवपुराणमिव कुमारसंभवमपि सर्वात्मना समनुसरतीति विस्पष्टमेवेदं विमर्शकमहाशयानां। य एव च प्रवाहश्शिवपुराणे कथारसस्य, य एव

१. एपिग्राफिका इण्डिका ३ - १२० - १२४.

२. दृश्यतां कुमारसंभवस्योपोद्घातश्श्रीतारानाथतर्कवाचस्पतिविलिखितः ।

३. विलोक्यतामस्मत्कृता प्रकृतनाटकटिप्पिणी.

च कथापुरुषाः, यैव च परस्परमुक्तिप्रत्युक्तिवैदग्धी, यदेव च वर्णनानैपुणम्, तान्येव प्रायः कविनाप्यनेन समायोजितानि। न पुनर्विशेषान्तरं किमपि रूपकोचितमासूत्रितममुना। विमृश्यतां, न खलु वस्तुघटनासंप्रदायः किञ्चिदपि चमत्कारपदमारोपितः। नापि पात्राणामुक्तिप्रत्युक्तिव्यतिकरः कियताप्यंशेन समानीतस्सारस्यभूमिम्। न वा रसविलासः कथमपि परिमलं ग्राहितः। नैव च वर्णनाविशेषः कल्पनाशिल्पमल्पमपि लम्भितः। परन्तु कथञ्चिदिति वृत्तप्रकाशनपरेणेव हन्त सर्वथाप्युदासितमत्र परमनेन कविनेति यत्सत्यमेकान्ततएव विषीदामः। न खलु पौराणिकस्येव रूपककर्तुर्युज्यते केवलमितिवृत्तप्रकाशने संरम्भः। पुराणतएव तत्सिद्धेः। तथा च ध्वनिकारः। "कविना प्रबन्धमुपनिबध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम्। तत्रेतिवृत्ते यदि रसाननुगुणां स्थितिं पश्येत्तां भङ्क्त्वापि स्वतन्त्रतया रसानुगुणं कथान्तरमुत्पादयेत्। न हि कवेरितिवृत्तमात्रनिर्वहणेन किंचित्प्रयोजनं। इतिहासादेवतत्सिद्धेः" इति। पञ्चमाङ्के परिदृश्यमानं पार्वतीप्रसाधनवर्णनमपि नातीव पुष्णाति मानसोल्लासम्। अपरत्र च क्वचिदनुभूयमानो वर्णनाविशेषोऽप्यनुजीवति नियतमन्यदीयच्छायाम्। "कुचयुगळं परिणद्धं, आभोगशालि कुचकुड्मळमायताक्ष्याः, तन्वीसमुल्लसति काचन रोमरेखा" इत्यादि वर्णनन्तु पुत्रीविषयकत्वादनुचितं सत्हृदयसङ्कोचमादधातीत्यत्र सचेतसां सरसं मन एव प्रमाणम्। एवमप्यत्र परिदृश्यमानं पदलालित्यम्, बन्धसौकुमार्यञ्च नियतमेकान्तत एव हृदयमपहरति भावुकानामिति यत्सत्यं वदामः। सहृदयाः, यदि नाम वामनभट्टबाण एव प्रकृतनाटकस्य रचयितेति निश्चीयते,

विश्वसिम:, तर्हि नेदमस्माकं वचनमप्राप्तावसरम्। यत् अनेन वामनवाणेन रचितमस्ति रघुनाथचरितमपीति ब्रूमः। यत्रैवमादितः पठ्यते।

"दंपत्योर्जगतां पत्योरपत्यं श्रेयसेऽस्तुवः।
विघ्नसन्तमसं भिन्तेयद्दन्त द्युतिचन्द्रिका।
... ... ... ...।
आनदेन्दुसमुद्भूता कवेरमृतशीतळा।
कस्य वा न सुखं कुर्यात् कविता कापि कौमुदी।
वन्द्यः कस्य न वाल्मीकिर्यस्य वाङ्मञ्जरीकणान।
आदायकवयोऽद्यापि निक्षिपन्ति स्वसूक्तिषु।
कः कालिदासकविना कृतं कर्म करिष्यति।
हनूमल्लङ्घितं कोऽन्यो लङ्घेतपुनरर्णवम्।
बाणं सत्कविगीर्वाणमनुबध्नाति कः कविः।
सिन्धुमन्धुः किमन्वेति द्युमणिं वा तमोमणिः।" इति।

आर्याः, एवमस्योपोद्घातस्य विलेखने वीरनारायणचरितादि-प्रेषणेन बहु बहु उपकृतमस्मन्मित्रमणिभिस्तञ्जानगरस्थ श्रीमत्कुप्पु-स्वामिशास्त्रिवर्यैरिति सधन्यवादं सकार्तज्ञ्यञ्च सहस्रकृत्वः प्रशंसा-मस्तेषामुपकारमिव विद्यापक्षपातमपीति साम्प्रतमेतावता विरमामः।

इति
श्रीवत्सकुलचक्रवर्ती
अभिनवभट्टबाणः कृष्णमाचार्यः।

॥ श्रीः ॥

# ॥ पार्वतीपरिणयम् ॥

## ॥ प्रथमोऽङ्कः ॥

आदौ [1]प्रेमकषायिता हरमुखव्यापारलोला शनै-
व्रींडाभारविघूर्णिता मुकुलिता भ्रूमोद्गमव्याजतः ।
पत्युः संमिलिता दृशा सरभसव्यावर्तनव्याकुला
पार्वत्याः परिणीतिमङ्गलविधौ दृष्टिः शिवायास्तु वः ॥१॥

अपि च ।

संपदमतरललभ्यामनन्यसामान्यवहलदर्पनिधेः ।
पुष्णातु चित्तयोनेरघटितघटनापटीयसी विभुता ॥ २ ॥

( नान्द्यन्ते )

**सूत्रधारः**— ( सप्रश्रयमञ्जलिं बद्ध्वा । )

[2]ब्रह्मस्तम्बकुटुम्बस्य [3]योगक्षेमविधायिनौ ।
आनन्दविग्रहौ भूत्यै भूयास्तामादिदम्पती ॥ ३ ॥

---

१. कषायिता = रञ्जिता सुरभिता वा । कषायस्सुरभौ रक्ते इति केशवः । दृष्टेः प्रेम्णा रक्तत्वं दशकुमारचरितेपि वर्णितम् ।

२. ब्रह्मस्तम्बकुटुम्बस्य "यद्यपि स्तम्बशब्दो धान्यादि विस्तार-वाची, तथापि ब्रह्मस्तम्बशब्दो ब्रह्माण्डे निरूढ इति सांप्रदायिकाः ।"

३. योगः = अलब्धलाभः । क्षेमः = लब्धपालनं ।

(इति पुष्पाञ्जलिं विकीर्य नेपथ्याभिमुखमवलोक्य ।) आर्ये इतस्तावत् ।

(प्रविश्य ।)

**नटी**— अज्ज, इअह्मि ।

आर्य, इयमस्मि ।

**सूत्रधारः**— आर्ये, अद्य खलु किमप्यभिनवं पार्वतीपरिणयं नाम रूपकं द्रष्टुमभिलषति परिषदेषा ।

**नटी**— अज्ज, तं उण अहिणअं कस्स कइणो किदी हुविस्सदि ।

आर्य, तत्पुनः अभिनवं कस्य कवेः कृतिर्भविष्यति ।

**सूत्रधारः**—

अस्ति कविसार्वभौमो वत्सान्वयजलधिकौस्तुभो[1] वाणः ।
नृत्यति यद्रसनायां वेधोमुखरङ्गलासिका वाणी ॥ ४ ॥

तद्विरचितेन विचित्रसंविधानेन वस्तुनानेन सामाजिकानुपस्थास्यामहे ।

**नटी**— अज्ज, अण्णएसु णाडएसु वट्टन्तेसु कहं तहिं जेव्व तत्तहोदो अहिलासो ।

आर्य, अन्येषु नाटकेषु वर्तमानेषु कथं तत्रैव तत्रभवतोऽभिलाषः ।

**सूत्रधारः**—

संविधानस्य सामग्र्यं[2] रसानां परिपुष्टता ।
संदर्भसौकुमार्यं च सभ्यानां रञ्जने क्षमम् ॥ ५ ॥

---

१. जलधिकौस्तुभः । जलधिसंभव इति पाठस्तु नहृद्यः ।

२. सामग्र्यं = पुष्कलत्वं, चमत्कार इति यावत् ।

तत एवाहं गुणग्राहितया तत्र प्रवृत्तः ।

**नटी**— जइ एवं, जुज्जइ ।

यद्येवं, युज्यते ।

**सूत्रधारः**— (नटीं निर्वर्ण्य ।) आर्ये, पार्वतीपरिणयप्रसङ्गेऽपि किंनिमित्तं भवती विमनायमानेव विलोक्यते ।

**नटी**— अज्ज, इमिणा परिणअप्पसङ्गेण अह्माणं वि वच्छाए बालचन्दिआए अणुरूववरलाहमहूसवो कहं भविस्सदित्ति णिरन्दरं चिन्दाउलं होइ मे हिअअम् ।

आर्य, अनेन परिणयप्रसङ्गेनास्माकमपि वत्साया बालचन्द्रिकाया अनुरूपवरलाभमहोत्सवः कथं भविष्यतीति निरन्तरं चिन्ताकुलं भवति मे हृदयम् ।

**सूत्रधारः**—आर्ये अलं विषादेन ।

**विधिरेव कन्यकानामभिमतवरयोजनार्थमुद्युङ्क्ते ।**
**अयमिह महतीदयितो[1] मुनिरिव गिरिराजकन्यायाः ॥ ६ ॥**

**इति प्रस्तावना ।**

(ततः प्रविशत्याकाशमार्गेण नारदः ।)

**नारदः**— हन्त, जन्मनः प्रभृति न जहाति नूनमस्मानियममरकार्यघटनाकुतूहलिता । यतः ।

**दक्षाल्लब्धसमुद्भवा तदनु तं त्यक्त्वा पतिद्रोहिणं**
**जाता संप्रति शैलराजसदने गौरीति दाक्षायणी ।**

---

१. महतीदयितः - महती इति नारदवीणायास्संज्ञा ।

एनां योजयितुं हरेण हिमवत्सानौ तपस्तन्वता
कार्यं भावि समाकलय्य मरुतामद्य प्रवर्तामहे ॥ ७ ॥

(किंचिदन्तरमवतीर्यावलोक्य च।) परिवहनाम्नः पवनस्य पन्थानं प्राप्तवानस्मि। तथा हि।

आराद[1]ञ्जलिपेयमत्र विकसन्मन्दारपुष्पोत्थितं
सौरभ्यं पवनोपनीतमभितो धावन्त्यमी षट्पदाः।
तन्वीमण्डलमार्द्रयन्ति कणिका मन्दाकिनीपाथसा-
[2]मप्यन्तःकरणं च मे सुमहतीमालम्बते निर्वृतिम् ॥ ८ ॥

(सरभसावतरणं नाटयित्वा। अधोऽवलोक्य।) अये, मध्यमलोकस्य [3]नेदीयांसं प्रदेशमनुप्राप्तोऽस्मि। यतः।

---

१. अञ्जलिपेयं = सान्द्रं।

२. अप्यन्तःकरणं चेत्यादि -

"मातलिः—

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति च प्रविभक्तरश्मिः।
तस्यद्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम्॥

राजा—मातले, अतः खलु सबाह्यान्तःकरणोममान्तरात्मा प्रसीदति।" इति शाकुन्तलम्।

३. नेदीयांसं = अन्तिकतरं। अन्तिकशब्दस्य नेदादेशः।

उद्यद्भिः शिखरैरमी कतिचन व्यज्यन्त एवाचला
वैमल्यादनुमीयते च परितस्स्रोतस्विनीसंततिः ।
सूच्यन्ते परिमण्डलेन तरवो नीलाम्बुदश्रीमुषो
मन्दं मन्दमुपैति लोचनपथग्राह्यां दशां मेदिनी ॥ ९ ॥

( पुनर्विलोक्य साश्चर्यम् । )

गिरिवरतटिनीगुल्मैर्दर्शनपदवीं क्रमादुपारूढैः ।
अवरोहति मयि रभसाद्भूरियमारोहतीव गगनतलम् ॥ १० ॥

मुहूर्तमात्रादवतीर्णोऽस्मि हिमवदुपकण्ठभूमिम् । ( किंचिदन्तरमवतीर्यावलोक्य च । ) अयं हि शैलराजः

उत्सारयन्निव विभाति नभोऽवकाशं
शृङ्गैर्विहारभवनैरिव तुङ्गतायाः ।
आभोगवद्भिरमृतांशुकरावदातै-
राक्रामतीव कटकैर्हरिदन्तराणि ॥ ११ ॥

अतिरिच्यते खल्वयमसाधारणेन भुवनधुरंधरेण भूम्ना मन्दरगन्धमादनप्रभृतिभ्यो महामहीधरेभ्यः । यतः ।

---

१. उद्यद्भिश्शिखरैः ...... गिरिवरतटिनी ......
"शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात्पादपाः ।
सन्तानैस्तनुभावनष्टसलिला व्यक्तिं व्रजन्त्यापगाः
केनाप्युत्क्षिपतेव मर्त्यभुवनं मत्पार्श्वमानीयते ॥ "
इति शाकुन्तलम् ।

२. भूम्ना = माहात्म्येन ।

[४]त्रिभुवनगुरुणा गुणातिरागा-
त्कमलभुवा कलिताधिपत्यलक्ष्मीः ।
अविरतमनुशास्ति देवतात्मा
सकलमिदं कुलशैलचक्रवालम् ॥ १२ ॥

तदहमधुना किन्नरीगीतनिष्पन्दकृष्णसारेण चमरीजालवालविक्षेपविरचितालीकचन्द्रोदयविलासेन कस्तूरीपरिमलोपहतगगनागमनखेदेन शैलेयगन्धिना कटकवर्त्मना प्रस्तुतवस्तुसाधनाय प्रविशामि यावदोषधिप्रस्थम् । (तथा कृत्वा पुरोऽवलोक्य ।) इदं तदोषधिप्रस्थं

विपुलकनकशृङ्गोपान्तविश्रान्तमेघं
सुरतरुवरवाटीशोभमानोपकण्ठम् ।
मणिभवनमहोभिः सृज्यमानेन्द्रचापं
मदयति मम चेतो मन्दिरं विस्मयानाम् ॥ १३ ॥

(पुरप्रवेशमभिनीयाग्रतो दृष्टिं दत्त्वा ।) इदमभ्रंलिहगोपुरशिखरावलीढनक्षत्रपथं हैमवतमायतनम् (प्रवेशं नाटयन् । आकाशे ।) भोः कञ्चुकिन्, कुत्र वर्तते कुलाचलचक्रवर्ती । किं ब्रवीषि—'देव्या मेनया सार्धं किमपि मन्त्रयन्नभ्यन्तरमण्डपमधिवसति' इति । तर्हि साधीयानवसरः कार्यनिवेदनस्य । (इति परिक्रामति ।)

---

४. त्रिभुवनगुरुणा -
"अस्त्युत्तरस्यां दिशिदेवतात्मा......"
"प्रजापतिः कल्पितयज्ञभागं
शैलाधिपत्यं स्वयमन्वतिष्ठत् ।" इति कुमारसंभवः ।

( ततः प्रविशति हिमवान्, मेना, परिमितः परिजनश्च । )

**हिमवान्**— देवि, कन्यापितृत्वं खलु गृहमेधिनामधिकतरं दुःखमावहति । अस्मत्कुलालंकरणमियं च गैरी परिणययोग्यां दशां प्रतिपद्यते । तथा हि ।

आभोगशालि कुचकुड्मलमायताक्ष्या
वक्षोऽवकाशमभिवाञ्छति संनिरोद्धुम् ।
अप्यस्तिनास्तिवचसां विषये वलग्ने
तन्वी समुल्लसति काचन रोमरेखा ॥ १४ ॥

**मेना**—जहा अज्जउत्तो आणवेदि, तहा विवाहमङ्गलजोग्गा संवुत्ता ।
यथार्यपुत्र आज्ञापयति, तथा विवाहमङ्गलयोग्या संवृत्ता ।

**हिमवान्**—देवि, अन्यदपि श्रूयताम् ।

कुचयुगलं परिणद्धं यथा यथा वृद्धिमेति तन्वङ्ग्याः ।
वरचिन्ताहृतमनसस्तथा तथा कार्श्यमेति मे गात्रम् ॥१५॥

---

१. अस्तिनास्तिवचसां विषये=अतिसूक्ष्म इत्यर्थः । "सदसत्संशयगोचरोदरी" इति नैषधः ।

२. कुचयुगलमित्यादि -

"उद्वेगमहावर्ते पातयति पयोधरोन्नमनकाले ।
सरिदिवतटमनुवर्षं विवर्द्धमाना सुता पितरम् ॥

यौवनारम्भ एव च कन्यकानामिन्धनीभवन्ति पितरः सन्तापानलस्य । हृदयमन्धकारयति मे दिवसमिव पयोधरोन्नतिरस्याः । यथा यथा समापतन्ति दूता वराणां, वराकी लज्जमानेव चिन्ता तथा तथा नितरां प्रविशति मे हृदयम् ।" इति हर्षचरितम् ।

**मेना**—मह वि रत्तिदिअं भाइदे अस्सिं ज्जेव अत्थे णिहिअहिअआए किं लक्खीअदि ।

ममापि रात्रिंदिवं भाविते ऽस्मिन्नेवार्थे निहितहृदयायाः किं लक्ष्यते ।

**हिमवान्**—(पुरोऽवलोक्य ।) देवि, वीणाविहारी मुनिरित एवाभिवर्तते । तदर्घ्यमानीयताम् ।

**मेना**—जहा आणवेदि अज्जउत्तो । (इत्यर्घ्यमानयति ।)

यथाज्ञापयत्यार्यपुत्रः ।

**हिमवान्**—(उत्थाय साञ्जलिबन्धम् ।) भगवन्, अभिवादये ।

**नारदः**—अभ्युदयपरम्परावाप्तिरस्तु ।

(हिमवानासनमुपनीयार्घ्यं समर्पयति ।)

(नारदः प्रतिगृह्णाति ।)

**हिमवान्**—(सहर्षमञ्जलिं बद्ध्वा ।)

[१]स्वायत्तसिद्धाखिलकामनानां
तत्त्वे परस्मिन्परिनिष्ठितानाम् ।
भवादृशामागमनोत्सवोऽयं
न लभ्यते नूनमनात्तपुण्यैः ॥ १६ ॥

**नारदः**—निस्पृहैरपि मादृशैस्त्वादृशाः सर्वाश्रमोपकारिणो गृहमेधिनः पुरुषा द्रष्टव्या एव ।

---

१. स्वायत्तसिद्धेत्यादि । "स्वाधीनकुशलास्सिद्धिमन्तः" । इति शाकुन्तलम् । 'अहोऽल्पपुण्यैः' इति त्वपपाठः ।

**हिमवान्**—यदभिहितं भगवता, तदनुग्राह्येषु ।

**नारदः**—किमनुग्राहकस्यानुग्राह्यतायां वितर्कः । किं च [1]तीर्थभूतो भवानस्माभिरभिगन्तव्य एव । यतः ।

**शिरसि निपतिता पुरा पुरारे-**
**रथ शिखरे तव यत्ततोऽवतीर्णा ।**
**अमरसरिदशेषलोकमान्या**
**[2]त्रिभुवनपावनतामुपैति तेन ॥ १७ ॥**

**हिमवान्**—किमेवमतिभूमिमारोप्यते भगवता निदेशवर्ती परिजनः ।

**नारदः**—

**[3]अप्रतिमरूपलक्ष्म्यौ गङ्गा गौरी च कन्यके भवतः ।**

**हिमवान्**—एवमेतत् ।

---

१. तीर्थभूतः = पुण्यक्षेत्रभूतः । तीर्थं शास्त्रे गुरौ यज्ञे पुण्यक्षेत्रावतारयोः, इति अनेकार्थसंग्रहः ।

२. त्रिभुवनेत्यादि । भवत्सङ्गादेव गङ्गाया अपि पावनत्वमिति किंपुनर्वक्तव्यं भवतः पवित्रत्वमिति भावः ।

"यथैवश्लाघ्यते गङ्गा पादेन परमेष्ठिनः ।
प्रभवेणद्वितीयेन तथैवोच्छिरसा त्वया ॥"

इति कुमारसंभवः ।

३. अप्रतिमेत्यादि । "शैलेन्द्रो हिमवान्नाम धातूनामाकरो महान् । तस्य कन्याद्वयं राम रूपेणाप्रतिमं भुवि । या मेरुदुहिता राम तयोर्माता सुमध्यमा । नाम्ना मनोरमा नाम पत्नी हिमवतः प्रिया । तस्यां गङ्गेयमभवज्ज्येष्ठा हिमवतस्सुता । उमा नाम द्वितीयाभूत्कन्या तस्यैव राघव ।" इति रामायणम् ।

**नारदः**—

पूर्वा तयोः पुरस्तादनुरूपं रमणमम्बुधिं प्राप्ता ॥ १८ ॥

**हिमवान्**—अस्त्येतत् ।

**नारदः**— द्वितीयायास्तु ते दुहितुः को नाम वरोऽभिमतस्तत्रभवतः ।

**हिमवान्**—भगवन्, इममेवार्थं विचिन्तयतो मे मनसि महाननुतापः अस्याश्च देव्याः ।

**नारदः**—

न नागलोके न मनुष्यलोके
न देवलोकेऽपि समो वरोऽस्याः ।
एषां प्रभुर्यस्तनयां त्वदीयां
स एव देवः परिणेतुमीष्टे ॥ १९ ॥

**हिमवान्**— तमपि भगवानेव निवेदयितुं प्रगल्भते[1] ।

**नारदः**—(आत्मगतम्) अस्येदानीं सामान्यवचनैरेव चन्द्रचूडामणिर्निगूहितव्यः। (प्रकाशम् ।) मया किल प्रणिधान[2]चक्षुषा दृष्टोऽयमर्थः। यथा विश्वाधिकं कमपि वरमियं ते दुहिता प्रपत्स्यते। नपुनरिममिति विशेषेण ।

**हिमवान्**—विश्वाधिक इत्येतावता कृतार्थोऽस्मि ।

---

१. प्रगल्भते = प्रभवति ।

२. प्रणिधानं = समाधिः ।

**नारदः**—

पुण्येन केनापि किलावतीर्णा
पुरातनी शक्तिरियं सुता ते ।
इमामसाधारणरूपलक्ष्मीं
न लोकसामान्यसुतां प्रतीयाः ॥ २० ॥

ततश्च भवता दुहितेयं न यस्मै कस्मैचित्प्रदित्सितव्या ।

**हिमवान्**—नाहं भवदाज्ञां लङ्घयामि ।

**नारदः**—अभ्युदयस्य निमित्तमन्यदपि किंचिदुपदिश्यते । यथा ।

अष्टाभिरेव तनुभिर्भुवनं दधान-
स्तेजस्त्रयेण महता विहितेक्षणश्रीः ।
अन्येषु सत्स्वपि य ईश्वरशब्दवाच्यः
सोऽयं तपस्यति तटे तव चन्द्रमौलिः ॥ २१ ॥

**हिमवान्**—अस्त्येतत् ।

**नारदः**—ततो भवानन्तिकमागतमिन्दुशेखरं सपर्यया कयाचिदुपतिष्ठताम् ।

---

१. अष्टाभिरेवेत्यादि । "कलितान्योन्यसामर्थ्यैः पृथिव्यादिभिरात्मभिः । येनेदंध्रियतेविश्वं" "अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतः" इति कुमारसंभवमालविकाग्निमित्रे ।

"यो लीलयैव त्रिपुरं ददाह कामं कालं सोमसूर्याग्निनेत्रः ।" इति शरभोपनिषत् ।

"यस्मिन्नीश्वर इत्यनन्यविषयश्शब्दो यथार्थाक्षरः ।" इति विक्रमोर्वशी ।

२. तपस्यति = तपः चरति ।

**हिमवान्**— भगवन्, अभिधेहि का वा सपर्या ।

**नारदः**— अनुरूपसखीजनपरिवृतां दुहितरमिमां गौरीं समित्कुशदूर्वाद्युपहरन्ती परिचर चन्द्रशेखरमिति प्रेषयतु भवान् ।

**हिमवान्**— तथा करिष्यामि ।

**नारदः**— (आत्मगतम् ।) उपक्षिप्तं बीजम् । कर्तव्यं च सामान्यवृत्त्या निवेदितम् । तद्यथागतं गमिष्यामि । (प्रकाशम् ।) हिमवन्, यदुक्तमस्माभिस्तदनुष्ठीयताम् । (इत्याकाशमार्गेण निष्क्रान्तः ।)

**हिमवान्**— (विलोक्य)

**दिवापि देहप्रभया दर्शयन्दिक्षु चन्द्रिकाम् ।**
**द्वितीय इव चन्द्रोऽयमारोहति दिवं मुनिः ॥ २२ ॥**

(मेनां प्रति ।) देवि, श्रुतं खलु त्वया महामुनेर्वचनम् ।

**मेना**— सुदं मए विस्साहिओ पुरिसो णाहो त्ति ।
श्रुतं मया विश्वाधिकः पुरुषो नाथ इति ।

**हिमवान्**— (स्वगतम् ।) विश्वाधिकशब्दोपक्षेपेण कर्तव्योपदेशेन च दुहितुरस्याश्चन्द्रशेखर एव वर इति सूचितम् । ( प्रकाशम् । ) देवि, नारदोपदिष्टामिन्दुमौलिसपर्यां विरचयितुं दुहितरं नियोक्तुमुद्युञ्ज्महे ।

[इति निष्क्रान्ताः सर्वे ।

## इति प्रथमोऽङ्कः ।

---

१. "उद्युञ्जामहे" इति त्वपपाठः ।

# द्वितीयोऽङ्कः ।

(ततः प्रविशति वनदेवता वासन्तिका ।)

**वासन्तिका**—आणत्तह्मि णन्दीस्सरेण जहा वासन्दिए, णिअमट्ठिदस्स [1]णीललोहिदस्स पूआपुप्फाइं णन्दणवणादो आणेहित्ति । ता जहा आदिट्ठं णन्दीस्सरेण तहा आआसमग्गेण गदुअ सोरहवासिददिसामुहाइं कप्पद्दुमकुसुमाइं णन्दणवणादो अवचेदुं गमिस्सम् । (इति तथा करोति ।)

आज्ञप्तास्मि नन्दीश्वरेण यथा वासन्तिके, नियमस्थितस्य नीललोहितस्य पूजापुष्पाणि नन्दनवनादानयेति । तद्यथादिष्टं नन्दीश्वरेण तथाकाशमार्गेण गत्वा सौरभ्यवासितदिशामुखानि कल्पद्रुमकुसुमानि नन्दनवनादवचेतुं गमिष्यामि ।

(ततःप्रविशति रम्भा ।)

**रम्भा**— तारआसुरबन्दिग्गहणसज्झसपरिसङ्किदो अच्छराजणो महामेरुगुहाणिलीणो आसि । अहं उण कुबेरणन्दणं णलकूबरं खणं विहाय जीविदं धारेदुं ण पारेमि । तदो तं एव्व अहिसरामि । (इत्यवतरति ।)

---

१. नीललोहितः = कण्ठे नीलः जटासु लोहितः शिवः ।

स्कान्देतु "नीलं येन ममाङ्गन्तु रसाक्तं, लोहितं त्विषा ।

नीललोहित इत्येव ततोऽहं परिकीर्तितः ॥"

इत्यस्तीति मुकुटः ।

तारकासुरवन्दिग्रहणसाध्वसपरिशङ्कितोऽप्सरोजनो महामेरुगुहानिलीन आसीत् । अहं पुनः कुबेरनन्दनं नलकूबरं क्षणं विहाय जीवितं धारयितुं न पारयामि । ततस्तमेवाभिसरामि ।

**वासन्तिका**— (रम्भां दृष्ट्वा ।) अए, पिहसही रम्भा आअच्छइ । ता उपसप्पामि णं। (इति तथा करोति ।)

अये, प्रियसखी रम्भा आगच्छति । तदुपसर्पाम्येनाम् ।

**रम्भा**— अए, हिमवक्कडअणिवासिणी वणदेवदा वासन्दिआ । भद्दं पिअसहीए ।

अये, हिमवत्कटकनिवासिनी वनदेवता वासन्तिका । भद्रं प्रियसख्याः ।

**वासन्तिका**— पिअसहि, किं एत्थ आअदे ।

प्रियसखि, किमत्रागतम् ।

**रम्भा**— तारआसुरवन्दिग्गहसज्झससङ्किदो अच्छराजणो महामेरुगुहाणिलीणो वट्टइ ।

तारकासुरवन्दिग्रहसाध्वसशङ्कितोऽप्सरोजनो महामेरुगुहानिलीनो वर्तते ।

**वासन्तिका**— सच्चं सो तारिसो दुट्ठसीलो ।

सत्यं स तादृशो दुष्टशीलः ।

**रम्भा**— कुबेरणन्दणं खणं अदिट्ठिअ ण सक्कुणोमि जीविदं धारेदुं त्ति पिअसही सुट्ठुदरं जाणादि ।

कुबेरनन्दनं क्षणमदृष्ट्वा न शक्नोमि जीवितं धारयितुमिति प्रियसखी सुष्ठुतरं जानाति ।

**वासन्तिका**— फुडं जाणामि, प्पसिद्धो क्खु तुह्माणं अण्णोण्णाणुराओ ।

स्फुटं जानामि, प्रसिद्धः खलु युवयोरन्योन्यानुरागः ।

**रम्भा**— तदो अहं आसण्णा एत्थ मअणकोअण्डणिरन्दरणिस्सरन्तसरणिअरजज्जरिदहिअआ अहिसरामि वञ्चिअ सहीजणाणं णलकूबरम् ।

ततोऽहमासन्नात्र मदनकोदण्डनिरन्तरनिःसरच्छरनिकरजर्जरितहृदयाभिसरामि वञ्चयित्वा सखीजनान्नलकूवरम् ।

**वासन्तिका**— जुज्जइ तारिसस्स अणुराअस्स ईरिसो व्वावारो ।

युज्यते तादृशस्यानुरागस्येदृशो व्यापारः ।

**रम्भा**—तुमं उण कहिं गच्छसि ।

त्वं पुनः कुत्र गच्छसि ।

**वासन्तिका**— [1]णिज्झादणिजस्सरूवस्स लोअणमेत्तबाडवस्स भअवदस्स णीललोहिदस्स पूआपुप्फाइं णन्दणवणादो आणेदुं आणत्तह्मि णन्दीस्सरेण ।

निध्यातनिजस्वरूपस्य लोचनमात्रवाडवस्य भगवतो नीललोहितस्य पूजापुष्पाणि नन्दनवनादानेतुमाज्ञप्तास्मि नन्दीश्वरेण ।

**रम्भा**— पिअसहि, अत्थि अहिणवो तत्थ वुत्तन्तो ?

प्रियसखि, अस्त्यभिनवस्तत्र वृत्तान्तः ?

---

१. निध्यातं = साक्षात्कृतं । निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम् । इत्यमरः ।

**वासन्तिका**— अण्णो कोवि णत्थि । पिदुणो णिदेसेण सपरिजणा पव्वई दिअसे दिअसे आगदुअ महादेवं आराधेइ ।

अन्यः कोऽपि नास्ति । पितुर्निदेशेन सपरिजना पार्वती दिवसे दिवसे आगत्य महादेवमाराधयति ।

**रम्भा**— किं आराधणस्स फलम् ।

किमाराधनस्य फलम् ।

**वासन्तिका**— परमेस्सरप्पसादो ।

परमेश्वरप्रसादः ।

**रम्भा**— जुज्जइ । गच्छ तुमं पत्थुदं कज्जं कादुम् । अहं वि जहासंकप्पिदं कादुं गमिस्सम् ।

युज्यते । गच्छ त्वं प्रस्तुतं कार्यं कर्तुम् । अहमपि यथासंकल्पितं कर्तुं गमिष्यामि ।

[इति निष्क्रान्ते ।

## [2]विष्कम्भकः ।

---

१. महादेवं । "पूज्यते यत्सुरैः सर्वैर्महांश्चैव प्रमाणतः ।
धातुर्महेति पूजायां महादेवस्ततस्स्मृतः ॥"
इति शिवपुराणम् ।

२. अत्र केचित् । अत्र विष्कम्भक इति लेखकप्रमादपतितम् । नहि तस्यात्रावसरः । तथाहि । किमत्र शुद्धो विष्कम्भक इष्यते, उतसङ्कीर्णः । नाद्यः । तस्य केवलसंस्कृतात्मकत्वात् । मध्यमपात्रप्रयोज्यत्वाच्च । तदुक्तं विद्यानाथेन । 'केवलसंस्कृतप्रायश्शुद्धः ।' इति । उक्तं च भरतेनापि । 'मध्यमपुरुषैर्नित्यं योज्यो विष्कम्भकोऽपि तत्वज्ञैः । संस्कृतवचनानुगतस्संक्षिप्तार्थः प्रवेशकवत्' इति । नचात्र रम्भावासन्तिके मध्यमपात्रे । प्राकृत-

व्यवहारेण तयोरतथात्वावगमात्। नापि द्वितीयः। तस्य विद्यानाथेन संस्कृतप्राकृतमिश्रितत्वाभिधानात्। प्रकृते च केवलप्राकृतात्मकत्वात्। अतः अत्र 'प्रवेशकः' इत्येव युक्तम्। दृश्यते च ईदृशकेवलप्राकृतात्मकविषये 'प्रवेशकः' इति विलेखनं मालविकारत्नावलीनागानन्दमालत्यादिषु।" इति वदन्ति। परंतु, संभवत्यत्र शुद्धो विष्कम्भकः। तस्य मध्यमपात्रप्रयोज्ये केवलसंस्कृत इव केवलप्राकृतेऽपि निष्प्रतिबन्धप्रसरत्वात्। न हि शुद्धत्वं केवलसंस्कृतात्मकत्वमिति केनापि प्राचीनेन प्रामाणिकेन लाक्षणिकेन निरूपितम्। येन तथाभ्युपगमाय निर्बध्येमहि। मध्यमपात्रप्रयोज्यत्वं हि तज्जीवातुः। तथा च नाट्यशास्त्रे। शुद्धस्संकीर्णो वा द्विविधो विष्कम्भकोऽपि विज्ञेयः। मध्यमपात्रैश्शुद्धः संकीर्णो नीचमध्यकृतः। इति। 'एकानेककृतश्शुद्धस्संकीर्णो नीचमध्यमैः' इति कारिकाव्याख्यावसरे "एकेन द्वाभ्यां वा मध्यमपात्राभ्यां शुद्धो भवति। मध्यमाधमपात्रैर्युगपत्प्रयोजितः संकीर्णः" इति अवलोककारः। कविराजोऽपि 'मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः। शुद्धस्स्यात्स तु संकीर्णो नीचमध्यमकल्पितः।' इत्येवाह। 'संस्कृतवचनानुगतः' इति भरतोक्तं विशेषणन्तु, "नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः।" इत्युपरिष्टाद्वक्ष्यमाणे प्रवेशकलक्षणे निवेशितस्य 'नाप्युदात्तवचनकृतः" इति विशेषणस्य प्रतिद्वंद्वितयोपात्तमिति तत्रत्यं संस्कृतपदं उदात्तपरमिति न तेनापि स्वाभीष्टार्थसिद्धिप्रत्याशा। तथा च उत्तरत्र "विष्कम्भकस्तु संस्कृतपुरोहितामात्यकञ्चुकिभिः" इति स एव वक्ष्यति। युक्तं चैतत्। 'शुद्धस्संकीर्णो वा' इत्युत्तरकारिकानुरोधात्। कथमन्यथा एकान्ततस्संस्कृतवचनानुगतत्वोक्तौ 'शुद्धस्संकीर्णो वा' इति विभागस्संगच्छताम्। संकीर्णे तदसंभवात्। शुद्धाभिप्रायकत्वं तद्विशेषणस्य ब्रूम इति चेत्, स्यादप्येवं यदि उत्तरत्र निर्दिष्टं स्यात्। यदि च न स्यात् 'मध्यमपात्रैश्शुद्धः' इत्युत्तरत्र निर्दिष्टम्। एतेन विद्यानाथोऽपि व्याख्यातः। यद्वा भूयसा व्यपदेशेन तथोक्तिरिति तत्रत्यं संस्कृतपदं भाषाद्वयासांकर्यतात्पर्यकमिति न किञ्चिदनुपपन्नम्। रम्भावासन्तिके अपि न नीचपात्रे। एकस्या अप्सरस्त्वेन

( ततः प्रविशति विविक्तमास्थानमण्डपमधिवसन्महेन्द्रः । )

**महेन्द्रः**— ( मण्डपद्वारं विलोक्य । ) कः कोऽत्र भोः ।

**देवनन्दी**— ( प्रविश्य । ) स्वामिन्, अयमस्मि ।

**महेन्द्रः**— महत्कार्यं विचारणीयमस्ति । अतो बृहस्पतिमन्तरेण नान्यः प्रवेशनीयः ।

---

अन्यस्याश्च वनदेवतात्वेन नीचत्वायोगात् । न हि प्राकृतव्यवहारमात्रेण नीचत्वं सेत्स्यति । अन्यथा नायिकादीनामपि तथा प्रसज्यमानं नीचपात्रत्वं केन वार्यतां । "पुरुषाणामनीचानां संस्कृतं स्यात्कृतात्मनाम् ।'शौरसेनी प्रयोक्तव्या तादृशीनां च योषिताम्" इति प्रमाणबलप्राप्तं तत्र प्राकृतमिति चेत्, हन्तैवं "छन्दस्तः प्राकृतं पाठ्यं स्मृतमप्सरसां भुवि" इति भरतवचनेऽपि निक्षिप्यतां दृष्टिः । तथा च परिहृतं रम्भायाः प्राकृतव्यवहारमात्रेण नीचपात्रत्वम् । वनदेवतायाश्च वासन्तिकाया नीचपात्रत्वकल्पनं नांशतोऽपि सहृदयसंवादमनुभवति । साह्युत्तमा । अत एव हि उत्तरचरिते वनदेवताया वासन्त्याः संस्कृतेनैव व्यवहारः । "संस्कृतं संप्रयोक्तव्यं लिङ्गिनीषूत्तमासु च" इत्युक्तेः । प्रकृते तु अनेन कविना तस्या रम्भायाश्च अत्र मध्यमपात्रत्वमभिप्रेतमिति ध्येयम् । नन्वेवं कथमत्र तस्या मध्यमाया वनदेवतायाः प्राकृतेन व्यवहारः इति चेत्, "कार्यतश्चोत्तमादीनां कार्यो भाषा विपर्ययः" इति वचनादिति गृहाण । कार्यं चात्र परिजनसाधारण्येन नन्दीश्वराज्ञानुष्ठानरूपम् । तथा च तत्तद्योग्यतापर्यालोचनयैव नीचत्वादिकं निर्णेयं न तु भाषामात्रेणेति सिद्धम् । एतेन प्रवेशकविमर्शो न विमर्शसहः । मालविकादिषु च चेट्यादीनामेव प्रवेश इति युक्तं तत्र प्रवेशककथनं । तथा च भरतः । 'परिजनकथानुबन्धः प्रवेशको नाम विज्ञेयः ।' इति । नह्यत्र रम्भा परिजनत्वेन प्रविष्टा । इत्थं च विष्कम्भक इति यथाश्रुतं सम्यगेवेति प्राहुः । अत्रत्यं तत्वं सुधियो विमृशन्तु ।

१. बृहस्पतिः = बृहतां देवानां वेदमन्त्राणां वा पतिः, सुरगुरुः ।

**देवनन्दी**— तथा । ( इति निष्क्रान्तः । )

( ततः प्रविशति बृहस्पतिः । )

**बृहस्पतिः**—( पुरोऽवलोक्य । ) अयमिह महेन्द्रो विविक्ते आस्थान-मण्डपे वर्तते । एष खलु ।

**कैश्चिन्नेत्रैर्दलितदनुजं वज्रमालोकमानः**
**कैश्चित्पश्यन्नमरसुदृशां सस्मितान्याननानि ।**
**कैश्चित्सेवाविहितमनसामञ्जलिं वीक्षमाण-**
**श्चित्ते चिन्तापर इव पुरो दृश्यते वासवो मे ॥ १ ॥**

तदेनमुपसर्पामि । ( इति तथा करोति । )

**महेन्द्रः**— ( बृहस्पतिं दृष्ट्वा । ) इहोपविश्यताम् ।

**बृहस्पतिः**— तथा । ( इति [1]भद्रासनान्तिकमुपविशति । )

**देवनन्दी**— ( प्रविश्य । ) स्वामिन्, देवदूतो देवलो विज्ञापयति विज्ञाप्यं मे किंचिदस्तीति ।

**महेन्द्रः**— तर्हि तमेकं प्रवेशय ।

( ततः प्रविशति देवदूतः । )

**देवदूतः**— अयं हि स्वामी बृहस्पतिना सह किमपि मन्त्रयन्वर्तते । तदेनमुपसर्पामि । ( इत्युपसृत्य । ) जयतु जयतु स्वामी ।

**महेन्द्रः**— देवल, किमुद्विग्न इव विलोक्यसे ।

**देवदूतः**—तारकदनुजसमाक्रान्तिमन्तरेण किमन्यदस्माकमुद्वेगकारणं ।

---

१. भद्रासनं । ' नृपासनन्तु यद्भद्रासनं ' इत्यमरः ।
" द्वे मण्यादिकृतराजासनस्य " इति सुधा ।

**महेन्द्रः**— किमस्त्यभिनवोपरोधः ।

**देवदूतः**— अतिभूमिं गतामसुरपीडां कथं स्वामिने विज्ञापयामि ।

**महेन्द्रः**— मा भैषीः । कथय तेषामुद्यमम् ।

**देवदूतः**— कथयामि । श्रूयताम् ।

उद्धृत्यामरदीर्घिकाजलभुवामम्भोरुहाणां ततिं
स्वैरं नन्दनपादपानभिमतानामूलमुन्मूल्य नः ।
हत्वा वाञ्छितवस्तुदानचतुरां तामर्जुनीं दुर्जनाः

( इत्यर्धोक्ते विरमति । )

**महेन्द्रः**— अवशिष्टं च कथ्यताम् ।

**देवदूतः**—

स्वर्गस्त्रैणकचग्रहं रचयितुं निश्शङ्कमुद्युञ्जते ॥ २ ॥

**महेन्द्रः**— देवल, कुलिशसहाये मद्बाहौ जाग्रति किमेवमतिशंका क्रियते । विमृश्य ।

---

१. उद्धृत्येत्यादि ।
'मन्दाकिन्याः पयः शेषं दिग्वारणमदाविलं ।
हेमाम्भोरुहसस्यानां तद्वाप्यो धाम सांप्रतम् ॥'
इति कुमारसंभवः ।
'चिच्छेद नन्दनतरून् देवस्त्रीपरिपालितान् ।'
इति शिवपुराणम् ।

२. अर्जुनीं = गां । 'अर्जुनी गवि ।' इति मेदिनी ।

३. स्त्रैणं = स्त्रीणां समूहः । स्त्रीपुंसाभ्यामिति नञ् ।

वृत्रं बलं च नमुचिं च कथावशेषं
कृत्वा विधाय कुलपर्वतपक्षभेदम्।
त्रैलोक्यरक्षणपटोर्मम तारकेऽस्मि-
न्वेधोवरः किल महानयमन्तरायः॥ ३॥

तत्कतिपयैरेव दिवसैस्तत्प्रतिक्रिया भविष्यति। गच्छ त्वं समुचितनियोगकरणाय।

**देवदूतः**— तथा। (इति निष्क्रान्तः।)

**महेन्द्रः**— गुरो, किमतःपरं विधातव्यम्।

**बृहस्पतिः**—यदादिष्टं भगवता विरिञ्चेन। पूर्वेद्युरेव तारकदनुजाक्रान्तिमसहमानैरस्माभिरमरपरिषदा सार्धं भगवानुपस्थितः पद्मयोनिराचष्ट। यथा सेनान्यमन्तरेण नान्येन तारको निहन्तव्यः। तदुत्पादने चायमभ्युपायः।

हैमवते कटकतटे शशाङ्कचूडामणिस्तपस्तनुते।
यत्नेन येन केनचिदस्तु प्रणयी स पार्वत्याम्॥ ४॥

ततस्तयोरात्मसंभवेन सेनान्या कुमारेण वो मनोरथसिद्धिर्भविष्यतीति।

**महेन्द्रः**— तत्कथं गिरिजा गिरिशेन परिग्राह्यते। कदा वा तदुत्पन्नः कुमारः पूरयिष्यति नो मनोरथान्।

---

१. कुलपर्वत ......।
“महेन्द्रो मलयस्सह्यश्शुक्तिमानृक्षपर्वतः।
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः”

**बृहस्पतिः**— नहीश्वराणां व्याहृतयो व्यभिचरन्ति ।

**महेन्द्रः**— ( सस्मरणं सहर्षं च ) विरिञ्चिसमादिष्टमस्मत्कार्यमप्यङ्गीकुर्वतीव पितुर्निदेशेन सपरिजना पार्वती दिवसे दिवसे समागत्यभगवन्तमिन्दुशेखरं परिचरतीति रम्भामुखादश्रौषम् ।

**बृहस्पतिः**— यद्येवं सिद्धं नः समीहितम् ।

**महेन्द्रः**— किमेतावता ।

मुग्धैरप्सरसां विलासहसितैर्वाक्यैर्मनोहारिभिः
कर्णान्तस्खलितैरपाङ्गवलितैरारेचितभ्रूलतैः ।
बाहोः स्रस्तकुचोत्तरीयघटनामञ्जुक्वणत्कङ्कणै-
र्व्यापारैरपि यो विकारपदवीं न प्रापितस्संयमी ॥५॥

तस्य पुनरचिन्तनीयमनवधिकानन्दसुन्दरमनादिनिधनमनञ्जन-

---

१. नहीश्वराणां इत्यादि ।
"नहीश्वरव्याहृतयः कदाचित्पुष्णन्ति लोके विपरीतमर्थं ।"
इति कुमारसंभवः ।

२. आरेचितभ्रूलतैः=आरेचिते एकैकशो विवर्तिते भ्रूलते येषु तैः ।
"स्याद्भ्रुवोर्ललिताक्षेपादेकस्या एव रेचितम् ।"
इति नाट्यदीपिका ।

३. अनञ्जनम् ।
"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्"
इति श्वेताश्वतरोपनिषत् ।

"निष्क्रियं = स्वमाहिमप्रतिष्ठितं कूटस्थमित्यर्थः । निरञ्जनं = निर्लेपम् ।" इति श्रीशङ्कराचार्याः ।

मगुणमक्रियमात्मानमबाह्येन चक्षुषा साक्षात्कुर्वतः समुपसंहृताखिलद्वैतकल्पनाविकल्पस्य स्वतन्त्रकर्तुश्चराचरगुरोर्भगवतश्चन्द्रमौलेः कियद्वशीकरणं गौरीपरिचरणम् ।

बृहस्पतिः— मघवन्, अन्ययुवतिसामान्यामेव तां न मन्येथाः । यतः ।

आसेचनकतनुश्रीरन्तःकरणस्य किमपि संवननम् ।
सा खलु गिरिराजसुता संमोहनमस्त्रमेव पुष्पेषोः ॥ ६ ॥

महेन्द्रः— (सहर्षम् ।) पुष्पेषोरित्युपोद्घातेन स्मारितोऽस्मि, स एव तयोर्गिरिजागिरिशयोर्घटने पटीयानिति ।

बृहस्पतिः— (सहर्षम् ।)

त्रैलोक्यशासने दक्षा तावकी मतिरूर्जिता ।
शान्तिकं पौष्टिकं कर्तुं शक्ता नः केवलं मतिः ॥ ७ ॥

---

१. आत्मानं...... ।
'यमक्षरं वेदविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम् ।'
इति कुमारसंभवः ।

२. आसेचनकं ।
'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् ।' इत्यमरः ।

३. संवननं = 'वशक्रिया संवननं ।' इत्यमरः ।

४. संमोहनं ।
"उन्मादनस्तापनश्च शोषणः स्तम्भनस्तथा ।
संमोहनश्च कामस्य पञ्चबाणाः प्रकीर्तिताः ॥"

यतो मदीयापि बुद्धिरिमां वितर्कपदवीं नावतीर्णा । तदविलम्बितमेव समाहूयतां कामः ।

**महेन्द्रः**— (मण्डपद्वारं विलोक्य ।) कः कोऽत्र भोः ।

(प्रविश्य ।)

**देवनन्दी**— स्वामिन्, अयमस्मि ।

**महेन्द्रः**— देवनन्दिन्, आहूयतां झटिति कामः ।

**देवनन्दी**— तथा । (इति निष्क्रान्तः ।)

(ततः प्रविशति रतिवसन्ताभ्यां सह कामः ।)

**कामः**— सखे वसन्त, किमकाण्डे स्वामी महेन्द्रस्समाह्वयति ।

**वसन्तः**— एवं मन्ये ।

आर्द्रापराधकलुषीकृतया कयाचि-
द्दावद्धरोषमभिमानवशेन धूतः ।
सम्मोहनेन भवतः किल सायकेन
तस्या विधातुमभिवाञ्छति चित्तभेदं ॥ ८ ॥

**कामः**— उपसृत्य सर्वं ज्ञास्यामः । (इत्युपसर्पति ।)

**महेन्द्रः**— (विलोक्य सहर्षम् ।)

मुखरमधुपमालाचारुमौर्वीसनाथं
त्रिभुवनजययोग्यं [1]चापमंसे दधानः ।
मुखमुदितविलासं वीक्षमाणः प्रियायाः
सहमधुरिह मन्दं मन्दमायाति कामः ॥ ९ ॥

---

१. चापमंसे इत्यादि ।
"रतिवलयपदाङ्के चापमासज्य कण्ठे ।" इति कुमारसंभवः ।

(कामो रतिवसन्ताभ्यां सार्धमुपसृत्य चापगर्भेणाञ्जलिना सविलासं प्रणमति ।)

**महेन्द्रः**— (आसनान्तिकं हस्तेन निर्दिशन् ।) सखे काम, इहोपविश्यताम् ।

(कामो रतिवसन्ताभ्यां सार्धमुपविशति ।)

**बृहस्पतिः**—अये, माननीयं भवन्तं स्थाने खलु मानयति महेन्द्रः ।

**कामः**—(अञ्जलिं बद्ध्वा ।)

त्रैलोक्यनाथस्य तवातिशक्तेः
किमस्ति कार्यं मघवन्मयापि ।
प्रकाशिताशेषदिशावकाशो
दिवाकरो दीपमपेक्षते किम् ॥ १० ॥

**बृहस्पतिः**— मा भवानेवमाचष्टाम् ।

असावलोकसामान्यचापविद्याधुरंधरः ।
करोतु कार्यं सकलं बाहुस्तव [1]दिवौकसाम् ॥ ११ ॥

**महेन्द्रः**— सखे काम,

चक्रेण विष्णोरपि यद्दुरापं
तरस्विना वा शतकोटिना मे ।
तत्साधयेत्पुष्पमयं त्वदस्त्र-
महो भवानद्भुतबाहुवीर्यः ॥ १२ ॥

---

१. दिवौकसां = देवानां, दिवं स्वर्गः ओकः स्थानं येषामिति विग्रहः ।
"मन्दरः सैरिभः शक्रसदनं खं दिवं नभः ।"
इति त्रिकाण्डशेषः ।

**कामः**— (सगर्वम् ।) स्वामिन्, यस्ते सापत्न्यमाचरति ।

दनुजो वा मनुजो वा मुनिरपि वा मुग्धचन्द्रचूडो वा ।
सुरलोकसुन्दरीणां स भवतु बद्धः कटाक्षशृङ्खलया ॥१३॥

(महेन्द्रो बृहस्पतेर्मुखमवलोकयति ।)

**बृहस्पतिः**— अये काम, यस्त्वया चरमोऽर्थः परिगणितो मुग्धचन्द्रचूडो वेति, स इदानीं शंकरः शैलराजकटकसीम्नि निरतिशयशीतलान्तःकरणस्तपश्चरति ।

**कामः**— ततस्ततः ।

**बृहस्पतिः**— तमिदानीं पितुर्निदेशेन सौभाग्यमयीव सालभञ्जिका सौन्दर्यदेवतेव विग्रहिणी ससखीजना पार्वती परिचरति ।

**कामः**— ततस्ततः ।

**बृहस्पतिः**— तयोश्च मेलने दिविषदां सुमहती कार्यसिद्धिः । सा च भवन्तमेव कटाक्षयति ।

---

१. दनुजो वेत्यादि ।

"तव प्रसादात्कुसुमायुधोऽपि
सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणे-
र्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥"

इति कुमारसंभवः ।

२. तमिदानीमित्यादि ।

"गुरोर्नियोगाच्च नगेन्द्रकन्या
स्थाणुं तपस्यन्तमधित्यकायाम् ।
अन्वास्ते........"

इति कुमारसंभवः ।

**कामः**—( आत्मगतम् । ) अहो, अनात्मज्ञता[1] हि पुंसामात्मनिधनमापादयति, यदहमात्मप्रशंसापरवशः परमेश्वरमपि सामान्यवृत्त्या पर्यजीगणम् ।

**वसन्तः**—( आत्मगतम् । ) अन्यदुपक्रान्तमन्यदेवापतितम् ।

क्वायं सुगन्धिविशिखः स्वदमानचापः[2]
स्त्रीणां वशीकरणकर्मणि जागरूकः ।
क्वासौ ललाटनयनानलविस्फुलिङ्ग-
वार्तावशेषितपुरत्रितयो महेशः ॥ १४ ॥

**रतिः**— अम्हो, अच्चाहिदं आपडिदं जं खण्डपरसू जेदव्वो[3] ।
अहो, अत्याहितमापतितं यत्खण्डपरशुर्जेतव्यः ।

**कामः**— यत्पुनः परिजनपरमाणोर्मत्तोऽपि मखभुजः कार्यमिच्छन्ति तदात्मव्ययेनापि कर्म कर्तुमुद्युञ्जे ।

**महेन्द्रः**—

संमोहने तव शरे संहितमात्रे गिरीन्द्रकन्यायाः ।
मुखमुदितमुग्धहासं विलोकयिष्यति विमुक्तधृतिरीशः॥१५॥

तदीषत्करे[4]ऽस्मिन्कार्ये भवता न किंचिदपि शङ्कनीयम् ।

---

१. अनात्मज्ञता इत्यादि ।
"स्फुटमापदां पदमनात्मवेदिता ।" इति माघः ।

२. स्वदमानचापः । स्वदमानं रोचमानं चापं यस्य सः, स्वदमानचापः = इक्षुचापः ।

३. अत्याहितं = महाभीतिः ।

४. ईषत्करे = सुकरे, "ईषद्दुःसुषु" इति खल् ।

**कामः**—

त्यजन्यास्यामि कार्याय प्राणान्प्रियतमानपि ।
यशःशरीरममलं लभन्ते ह्यनुषङ्गिणः ॥ १६ ॥

तद्यथादिष्टं स्वामिना, तथा करिष्यामि ।

**महेन्द्रो बृहस्पतिश्च**— (हस्तमुद्यम्य ।)

अस्तु स्वस्त्ययनं तवाद्य मरुतां सत्याशिषामाशिष-
स्त्वां रक्षन्तु यशश्च ते सुविपुलं लोकत्रये दीव्यतु ।
शौर्यं त्वद्भुजयोरिदं च भवतात्पुङ्खानुपुङ्खोदयं
किंचोद्योगमिमं समर्थयतु नः स्वच्छन्दचेष्टो विधिः ॥१६॥

(कामो रतिवसन्ताभ्यां सह शङ्कमानो निष्क्रान्तः ।)

**महेन्द्रः**—गुरो, विरिञ्चयादेशानुरूपमस्माभिरेतावदनुष्ठितम् । कार्यसिद्धौ भगवती नियतिरेव प्रभवति ।

---

१. त्यजन्यास्यामीत्यादि ।
"अङ्गव्ययप्रार्थितकार्यसिद्धिः ।" इति कुमारसंभवः ।

२. अनुषङ्गिणः = कार्यसक्ताः ।

३. स्वस्त्ययनं । स्वस्ति, अयनं, इति च्छेदः । अयनं मार्गः, स्वस्ति शिवं, अस्तु । "शिवास्ते पन्थानस्सन्तु ।" इति शाकुन्तलम् । यद्वा स्वस्त्ययनं = मङ्गळम् ।

४. पुङ्खानुपुङ्खोदयं । "पुङ्खशब्दो यद्यपि बाणादिमूलप्रदेशवाची । तथापि अत्र शरलाक्षणिकत्वात्तस्य, यथा धन्विना केनचित् शराननु शरा विमुच्यन्ते तथेत्येवं पुङ्खानुपुङ्खशब्दः उत्तरोत्तराभिवृद्धे निरूढलाक्षणिकः ।" इति भट्टः ।

**बृहस्पतिः**— एवमेतत् ।

**महेन्द्रः**— स्थाण्वाश्रमं प्रति गच्छतः कामस्य पश्चाद्वृत्तान्तज्ञानाय कंचन प्रेषयितुमुद्युञ्जे ।

**बृहस्पतिः**— अहमपि प्रस्तुतकार्यसिद्धये कुलदेवताः प्रार्थयितुं गमिष्यामि ।

[इति निष्क्रान्ताः सर्वे ।

**इति द्वितीयोऽङ्कः ।**



# तृतीयोऽङ्कः ।

( ततः प्रविशति महेन्द्रो बृहस्पतिश्च । )

**महेन्द्रः**— गुरो, किं नाम कामः केनापि बाणसंधानेन खण्डपरशुं वशीकुर्यात् । आहोस्वित्संवर्तसमयदिनकरदुष्प्रेक्षं मुनिमीक्षितुमशक्नुवन्निवर्तेत । अथवा कोपान्धकारिचेतसात्मनो भालनयनपावकस्य पुरोडाशतां नीयेत । कथं भविष्यतीति न जाने (वामाक्षिस्पन्दनं सूचयित्वा साशङ्कम् । )

अदक्षिणामिदं चक्षुः स्फुरितैः शंसतीव मे ।
देवकार्यविघाताय जाग्रतो वामतां विधेः ॥ १ ॥

**बृहस्पतिः**— प्रतिहतममङ्गलम् । मघवन्, अनेन निमित्तेन ज्ञाप्यते वृत्तान्तज्ञेन केनचिदागन्तव्यमिति ।

( ततः प्रविशति नारदः । )

**नारदः**— मघवदादेशेन स्थाण्वाश्रमं गत्वा तत्रत्यमुदन्तं विज्ञाय समागतोऽस्मि । तदेनमुपसृत्य निवेदयिष्यामि तत्रत्यमखिलमुदन्तम् । (इति परिक्रामति । )

**महेन्द्रः**— ( विलोक्य । ) अयमेव महतीवल्लभो मुनिरुपसर्पति । तदासनमुपनीयताम् ।

( बृहस्पतिरासनमुपनयति । )

( नारदः उपविशति । )

**महेन्द्रः**— (अञ्जलिं बद्ध्वा ।) भगवन्, कथय भद्रमभद्रं वा दिविपदामभिलषितम् ।

**नारदः**— सर्वमादितः प्रभृति कथयामि । श्रूयताम् ।

**महेन्द्रः**— अवहितोऽस्मि ।

**नारदः**— तथा देवकार्याय प्रस्थितं कन्दर्पं तिरस्करिण्या विद्यया छन्नस्तत्रत्यवृत्तान्तजिज्ञासयाहं त्वन्निदेशादन्वसरम् ।

**महेन्द्रः**— ततस्ततः

**नारदः**— तत्र स्थाण्वाश्रमसमीपमासाद्य कामो वसन्तमभिहितवान् ।

**महेन्द्रः**— कथमिति ।

**नारदः**— सखे, त्वयास्मिन्हिमवदुपकण्ठकानने विजृम्भितव्यमिति ।

**महेन्द्रः**— ततः स किं कृतवान् ।

**नारदः**—

वाचालयन्नथ कुलानि वनप्रियाणा-
मङ्कूरयन्मलयमारुतकन्दलानि ।
सख्युः प्रसूनविशिखस्य भुजावलेपं
संवर्धयन्मधुरजृम्भत काननेषु ॥ २ ॥

**महेन्द्रः**— ततस्ततः ।

**नारदः**—

दत्तं प्रियाभिर्बहुमानपूर्व-
मास्वाद्य चूतासवमन्यपुष्टाः ।
आमोदिभिः पञ्चमरागभेदैः
प्राबोधयन्पञ्चशरावलेपम् ॥ ३ ॥

**महेन्द्रः**— ततस्ततः ।

**नारदः**—

**आधूय चन्दनतरूनुत्तमनघ्रास्तरङ्गमालिङ्ग्य ।**
**आदाय कमलसौरभमङ्कुरितो मलयशैलपवमानः ॥ ४ ॥**

**महेन्द्रः**— ततस्ततः ।

**नारदः**—

**चूताः कोरकिता विहाय सुदृशां हस्ताम्बुजामर्शनं**
**तत्पादाम्बुजताडनैरपि विना कङ्केलयः पुष्पिताः ।**
**तत्सङ्गीतकमन्तरेण हसिता रम्याः प्रियालद्रुमा**
**मुक्त्वा तद्वदनासवं मुकुलिता गन्धोत्तराः केसराः ॥ ५ ॥**

**महेन्द्रः**— ततस्ततः ।

---

१. चूता इत्यादि ।

"असूत सद्यः कुसुमान्यशोकः
स्कन्धात्प्रभृत्येव सपल्लवानि ।
पादेन नापैक्षत सुन्दरीणां
संपर्कमाशिञ्जितनूपुरेण ॥"

इति कुमारसंभवः ।

यद्यपि

"स्त्रीणां स्पर्शात्प्रियङ्गुर्विलसति वकुलश्शीधुगण्डूषसेका-
त्पादाघातादशोकस्तिलककुरवकौ वीक्षणालिङ्गनाभ्याम् ।
मन्दारो नर्मवाक्यात्पटुमृदुहसनाच्चम्पको वक्त्रवाता-
च्चूतो गीतान्नमेरुर्विकसति च पुरो नर्तनात्कर्णिकारः ॥"

इत्येव दोहदं श्रूयते । अथापि प्रकारान्तरमिदं दोहदस्येति कल्पनीयम् ।

नारदः—

आदाय चापमधिरोपितषट्पदज्यं
तस्मिन्हिमाचलमुपेयुषि पञ्चबाणे ।
वेलातिलङ्घि किमपि प्रणयातिरेका-
द्द्वन्द्वानि लौल्यमभजन्त विमोहितानि ॥ ६ ॥

महेन्द्रः— ततस्ततः ।

नारदः— किं बहुना ।

तस्मिन्वने निवसतामनुकूलमुल्लङ्घ्य धैर्यमर्यादाम् ।
अबलासु निर्ममानामासीदनुरागसिन्धुरुद्वेलः ॥ ७ ॥

महेन्द्रः— एवं सकलजनविकारकारिणि तस्मिन्प्रवृत्ते किं कृतवान्कामः ।

नारदः— स कामो रत्या वसन्तेन चान्वीयमानो महति देवदारुखण्डमण्डपे तरक्षुचर्मवर्मितायां हिमशिलावेदिकायामासीनमन्तर्मुखनिहितचित्तवृत्तिमभ्यन्तरपवननिरोधनिश्चलाननं ना-

---

१. आदाय इत्यादि ।

"तं देशमारोपितपुष्पचापे
रतिद्वितीये मदने प्रपन्ने ।
काष्ठागतस्नेहरसानुविद्धं
द्वन्द्वानि भावं क्रियया विवव्रुः ।"

इति कुमारसंभवः ।

२. वर्मित = कवचित ।

३. अभ्यन्तरेत्यादि ।

"अवृष्टिसंरम्भमिवाम्बुवाह-
मपामिवाधारमनुत्तरङ्गम् ।

साग्रनिहितपक्ष्माण्यक्षीणि धारयन्तमपरमिव निस्तरङ्गमम्बुधिं तमिन्दुशेखरमपश्यत् ।

**महेन्द्रः**— ततस्ततः ।

**नारदः**— ततो भगवानपि नीललोहितः प्रतीचाविलोचनेन प्रत्यञ्चमात्मानमपरोक्षीकृत्य शिथिलितपर्यङ्कबन्धः[1] प्रणिधानाद्व्यरंसीत् ।

**महेन्द्रः**—ततस्ततः ।

**नारदः**— स कामस्तद्दर्शनेन करतलविधृतकार्मुकः कर्तव्यमपरमजानन्क्षणमालिखित इव भयादतिष्ठत् ।

**महेन्द्रः**— ततस्ततः ।

**नारदः**—

अत्रान्तरे हरमुपासितुमभ्ययासी-
द्वासन्तिकाप्रसवकल्पितमण्डनश्रीः[2] ।

---

अन्तश्चराणां मरुतां निरोधा-
न्निवातनिष्कम्पमिवप्रदीपम् ॥"
इति कुमारसंभवः ।

१. पर्यङ्कबन्धः = वीरासनम् ।
"एकं पादमथैकस्मिन् विन्यस्योरौ तु संस्थितम् ।
इतरस्मिन् तथाचान्यं वीरासनमुदाहृतम् ॥"
इति वसिष्ठः ।

२. वासन्तिकाप्रसवः = मालतीकुसुमम् । वासन्तिकप्रसवेति पाठान्तरम् ।

श‍ृङ्गारवीरतपसामधिदेवतेव
सार्कं सखीभिरवनीधरराजकन्या ॥ ८ ॥

**महेन्द्रः**— ततस्ततः ।

**नारदः**— ततः स कामो लब्धावलम्ब इव समाश्वस्य दृष्टिप्रदीप-परिहारेण पाश्चात्यंभागमाश्रित्य समयं प्रतीक्ष्य स्थितवान् ।

**महेन्द्रः**— ततस्ततः ।

**नारदः**— पार्वती च सुखोपविष्टमष्टमूर्तिमष्टाङ्गस्पृष्टभूमिरवन्दिष्ट ।

**महेन्द्रः**— ततस्ततः ।

**नारदः**— अनुरूपंरमणमासादयेति तामाशिषावर्धयदर्धचन्द्रमौलिः ।

**महेन्द्रः**— ततस्ततः ।

**नारदः**— ततः क्षणे तस्मिन्नयमेवावसर इति स कामः कार्मुके [1]समधत्त संमोहनं बाणम् ।

**महेन्द्रः**— ततस्ततः ।

**नारदः**—

तदनु युगपदीशः पार्वतीवक्त्रपद्मे
स्मितविकसितगण्डे प्राहिणोल्लोचनानि ।

**महेन्द्रः**— ततस्ततः ।

---

१. समधत्त......... ।
"संमोहनं नाम च पुष्पधन्वा
धनुष्यमोघं समधत्त बाणम् ।"
इति कुमारसंभवः ।

**नारदः**—

पुलकिततनुरन्तर्भावमावेदयन्ती
दरनमितमुखेन्दुः सा च सव्रीडमस्थात् ॥ ९ ॥

**महेन्द्रः**— ततस्ततः ।

**नारदः**— [1]ततो भगवानन्तःकरणविक्रियां तपोबलेन संयम्य तत्कारणाय विष्वग्विलोचनानि व्यापारितवान् ।

**महेन्द्रः**— ततस्ततः ।

**नारदः**—

आरादपश्यदधिसंहितमोहनास्त्रं
कर्णावतंसपदकल्पितकार्मुकज्यम् ।
आकुञ्चितैकपदमञ्चितपूर्वकायं
लक्ष्यीकृतात्मवपुषं मदनं महेशः ॥ १० ॥

**महेन्द्रः**— (सभयम् ।) अवशिष्टं च कथ्यताम् ।

**नारदः**—तदनु प्रकुपितस्य शूलिनो भाललोचनादुदजृम्भत ज्वालावलीजटालो ग्रासलालस इव कालानलो वह्निः ।

**महेन्द्रः**— (सनिर्वेदम् ।) किमतः परं निवेद्यते ।

---

१. ततो इत्यादि ।

"अथेन्द्रियक्षोभमयुग्मनेत्रः
पुनर्वशित्वाद्बलवन्निगृह्य ।
हेतुं स्वचेतो विकृतेर्दिदृक्षु-
र्दिशामुपान्तेषु ससर्ज दृष्टिम् ।"

इति कुमारसंभवः ।

**नारदः**— तेन पुरारेर्नयनानलेन मदनः शलभतां नीतः।

(महेन्द्रो मूर्च्छति। नारदः समाश्वासयति।)

**महेन्द्रः**— (आश्वस्य।) हा भुवनरमणीय पुष्पबाण सकलजनानन्दन, पुरन्दरस्यार्थे त्यक्तजीवितोऽसि।

**बृहस्पतिः**— मघवन्, मा विषीद। भवितव्यता हि बलवती। तदास्ताम्। रतिः किं कृतवती।

**नारदः**— रतिरपि मोहं प्राप्ता।

**महेन्द्रः**— किं कृतवान्वसन्तः।

**नारदः**— मोहं प्राप्तः सखा वसन्तोऽपि।

**महेन्द्रः**— मूर्च्छितौ रतिवसन्तौ किमन्वतिष्ठताम्।

**नारदः**— प्रथमाश्वस्तेन मधुना कथंचित्संज्ञां लम्भिता रतिः पुरतः परुषपवनविकीर्यमाणपांसुपटलं भसितमयं पुरुषाकृति[1] पत्युरङ्गमालिङ्ग्य

**गुरुतरशोकोपहता कुररीव प्रियवियोगमापन्ना।**
**आक्रन्ददार्तनादं बाष्पस्नपितोन्नतस्तनी बाला॥११॥**

**महेन्द्रः**— ततस्ततः।

**नारदः**— तदनु हा नाथेति बहु विलपन्तीं रतिमाश्वासयदाकाशसंभवा वाणी। यथा

---

१. पुरुषाकृति इत्यादि।

"ददृशे पुरुषाकृति क्षितौ
हरकोपानलभस्म केवलम्।"

इति कुमारसंभवः।

मुञ्च शोकमयि कामवल्लभे
लङ्घ्यते जगति केन कल्पना ।
उद्भविष्यति पुनश्च ते पतिः
पार्वतीपरिणये पिनाकिनः ॥ १२ ॥

इति ।

**महेन्द्रः**— (समाश्वस्य सहर्षमिव ।)

भग्नो मनोरथो मे पुनरङ्कुरितुं किलायमुद्युङ्क्ते ।
दावाग्निलीढशेषस्तरुरिव धाराधरेण संसिक्तः ॥ १३ ॥

**बृहस्पतिः**— मघवन्, सत्यमेव वैहायसी वाणी । सर्वथा कामः पुनरुद्भविष्यति ।

**महेन्द्रः**— ततस्ततः ।

**नारदः**— कथंचित्प्रत्याश्वस्ता रतिर्नीता सा समानदुःखेन मधुना निजं भवनम् ।

**महेन्द्रः**— कामं कथावशेषं कृत्वा कालकण्ठः किमकरोत् ।

**नारदः**— स्त्रीसन्निकर्षपरिजिहीर्षया सह भूतगणेन भूतपतिरन्तर्धानमकरोत् ।

---

१. मुञ्च इत्यादि ।

"परिणेष्यति पार्वतीं यदा
तपसा तत्प्रवणीकृतो हरः ।
उपलब्धसुखस्तदा स्मरं
वपुषा स्वेन नियोजयिष्यति ।"

इति कुमारसंभवे अशरीरोक्तिः ।

**महेन्द्रः**— किं कृतवती पार्वती ।

**नारदः**—

आगत्य दोर्भ्यामादाय मूर्च्छामुकुलितेक्षणा ।
नीता नितान्तवात्सल्याद्गौरी हिमवता गृहम् ॥ १४ ॥

**महेन्द्रः** —भगवन्नारद, श्रुतं श्रोतव्यम् । किमतः परं प्रतिपद्यसे ।

**नारदः**— पुनरिमं वृत्तान्तं सत्यलोकवर्तिने चतुर्मुखाय निवेदयितुं गमिष्यामि । (इति निष्क्रान्तः ।)

( ततः प्रविशति रम्भा )

**रम्भा**— कुबेरभवणादो णिवट्टमाणाए ओसहिप्पत्थणअरे जो मए आकण्णिदो वुत्तन्तो तं सामिणे विण्णवेमि । (इति परिक्रामति ।)
कुबेरभवनान्निवर्तमानयौषधिप्रस्थनगरे यो मया आकर्णितो वृत्तान्तस्तं स्वामिने विज्ञापयामि ।

**महेन्द्रः**— ( विलोक्य । )

[1]सञ्चारिणीव वल्ली विद्युल्लतिकेव चापलोन्मुक्ता ।
मोहनकलेव मूर्ता कास्विदियं कमलपत्राक्षी ॥ १५ ॥

( निरूप्य ।) रम्भा खल्वियम् ।

**रम्भा**— (उपसृत्य । ) जेदु जेदु भट्टा ।
जयतु जयतु भर्ता ।

**महेन्द्रः**— रम्भे कुत आगम्यते भवत्या ।

**रम्भा**— कुबेरभवणादो ।
कुबेरभवनात् ।

---

१. सञ्चारिणीव । "सञ्चारिणी पल्लविनीलतेव" इति कुमारसंभवः ।

**महेन्द्रः**— किमस्ति तत्रापूर्वो वृत्तान्तः ।

**रम्भा**— णीललोहिदस्स णिडिलग्गिकीलजालेण कहावसेसिदो कामो-त्ति सव्वो भणइ । अण्णं च किं वि ओसहिप्पत्थणअरे ।

नीललोहितस्य निटिलाग्निकीलजालेन कथावशेषितः काम इति सर्वो भणति । अन्यच्च किमप्योषधिप्रस्थनगरे ।

**महेन्द्रः**— किं तदन्यत् ।

**रम्भा**— मम्महदाहेणं भग्गमणोरहा पव्वई परमेस्सरं जेव्व पइं अहिलसन्दी कठिणेहिं तवच्चरणेहिं अत्तणो अहिलासं पूरिदुं इस्सदि त्ति ।

मन्मथदाहेन भग्नमनोरथा पार्वती परमेश्वरमेव पतिमभिलषन्ती कठिनैस्तपश्चरणैरात्मनोऽभिलाषं पूरयितुमिच्छतीति ।

**महेन्द्रः**— किमुक्तमस्मिन्नर्थे मातापितृभ्याम् ।

**रम्भा**— मेणआदेवीए एव्वं भणिदम् ।

मेनकादेव्या एवं भणितम् ।

**महेन्द्रः**— किमिति ।

**रम्भा**—

परुसो तवोविसेसो तुह उण अग्गं सिरीससुउमारम् ।
विवसिदमेदं कहिणं पव्वइ ता दुक्करं त्ति पडिभाइ ॥ १६ ॥

---

१. कीलजालेन ज्वालासमूहेन । "वह्नेर्द्वयोर्ज्वालकीलौ" इत्यमरः ।

२. मातापितृभ्यां । "मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ।" इत्यमरः ।

[1]परुषस्तपोविशेषस्तव पुनरङ्गं शिरीषसुकुमारम् ।
व्यवसितमेतत्कठिनं पार्वति तद्दुष्करमिति प्रतिभाति ॥

**महेन्द्रः**— किमुक्तं हिमवता ।

**रम्भा**— अत्थि अणुमदं देण । अस्त्यनुमतं तेन ।

**महेन्द्रः**— रम्भे, साधीयांसमुदन्तमानीतवती । गच्छ त्वं समुचितनियोगकरणाय ।

**रम्भा**— तहा । तथा । (इति निष्क्रान्ता ।)

(नेपथ्ये)

**[2]वैतालिकः**—

[3]आधूय प्रणयं विवस्वति गते देशान्तरं पद्मिनी
सोढुं तस्य वियोगमक्षमतया म्लायत्सरोजानना ।
[4]सन्ध्यावल्कलिनी द्विरेफपरिषद्रुद्राक्षमालावती
तत्प्राप्तिस्पृहयेव संप्रति तपस्सक्ता समालक्ष्यते ॥ १७ ॥

**महेन्द्रः**— (आकर्ण्य ।) वयमपि सन्ध्यां वन्दितुं साधयामः ।

[इति निष्क्रान्ताः सर्वे ।

## इति तृतीयोऽङ्कः ।

---

१. परुष इत्यादि ।

"तपः क्व वत्से क्व च तावकं वपुः ।" इति कुमारसंभवः ।

२. वैतालिकः । विगतेन विविधेन वा तालेन चरति व्यवहरतीति वैतालिकः । "तत्तत्प्रहरणयोग्यै रागैस्तत्कालवाचिभिः श्लोकैः । सरभसमेव वितालं गायन्वैतालिको भवति ।" इति तल्लक्षणम् ।

३. आधूयेत्यादि । अनेन पार्वतीतपश्चरणमपि क्रोडीकृतम् । तथा चोत्तरत्र वक्ष्यति "क्षीणा पार्वतीनलिनी" इति ।

४. सन्ध्यावल्कलिनी = सन्ध्यारागरूपवल्कलसहिता ।

# चतुर्थोऽङ्कः ।

( ततः प्रविशति गृहीतमुनिविग्रहो नन्दी । )

**नन्दी**— आज्ञप्तोऽस्मि भगवता नीललोहितेन यथा—' नन्दिन्, मन्मथदाहेन भग्नमनोरथा पार्वती मन्निबन्धेन भावेन महान्तं नियममनुतिष्ठन्ती गौरीशिखरनाम्नि पितुः शिखरे तपश्चरति। तपस्यन्त्याश्च तस्या व्यतीतो बहुतिथः[1] कालः । तद्भवान् गृहीतमुनिवेषः तत्र गत्वा कीदृशो वा तस्या नियमः, कीदृशो वाभिलाषवन्ध इति तत्सख्योर्जयाविजययोर्मुखेन विदित्वा पुनरागच्छतु ' इति । तत्प्रभोर्नियोगमनुतिष्ठामि । ( इति परिक्रामन्विमृश्य । ) प्रकृतिकठिनानि खलु स्त्रीणां चेतांसि । तथाहि ।

एषा शिरीषसुकुमारशरीरयष्टि-
श्चान्द्री कलेव नयनोत्सवमावहन्ती ।
सञ्चेतुमिच्छति शिलाकठिनैः शरीरैः
संपादितान्यपि तपांसि तपोधनानाम् ॥ १ ॥

अपि च ।

शेते या किल हंसतूलशयने निद्राति सा स्थण्डिले
वस्ते या मृदुलं दुकूलमबला गृह्णाति सा वल्कलम् ।
या वा चन्दनपङ्कलेपशिशिरे धारागृहे वर्तते
पञ्चानामुदितोष्मणां हुतभुजां सा मध्यमासेवते ॥ २ ॥

---

१. बहुतिथः = बहूनां पूरणः । पूरणार्थके डटि बहुपूगगणेति तिथुगागमः । "काले गते बहुतिथे " इति शाकुन्तलम् ।

(ततः प्रविशतः कुसुमावचयमाचरन्त्यौ जयाविजये ।)

**जया**— हला विजए, तवच्चरणे किदमदीए पिअसहीए गौरीए मणोरहकप्पद्दुमो कदा फलं दंसइस्सदि ।

सखि विजये तपश्चरणे कृतमत्या प्रियसख्या गौर्या मनोरथकल्पद्रुमः कदा फलं दर्शयिष्यति ।

**विजया**— हला जए तहा मम्महदाहपरुसहिअओ णिक्करुणदाए पुडमं णिदंसणभूदो परमेस्सरो जदा अद्दहिअओ हुविस्सदि तदा फलं दंसइस्सदि ।

सखि जये, तथा मन्मथदाहपरुषहृदयो निष्करुणतायाः प्रथमं निदर्शनभूतः परमेश्वरो यदा आर्द्रहृदयो भविष्यति तदा फलं दर्शयिष्यति ।

(इति पुष्पावचयमाचरतः ।)

**नन्दी**— इमे खलु तस्याः प्रियसख्यौ जयाविजये । यावदुपसर्पामि ।

(तथा करोति ।)

**जया**— हला मम पुप्पकरण्डअं पूरिदं पुप्फेहिं । तुह उण कहम् ।

सखि मम पुष्पकरण्डकं पूरितं पुष्पैः । तव पुनः कथम् ।

**विजया**— ( पुष्पकरण्डकं विलोक्य ) मम उण अद्धं पूरिदं । अवसिट्ठं पूरइस्सम् ।

मम पुनरर्धं पूरितम् । अवशिष्टं पूरयिष्यामि ।

(इति पुष्पकरण्डकं पुष्पैः पूरयति ।)

**नन्दी**— (उपसृत्य ।) भद्रं भवतीभ्याम् ।

**जयाविजये**— भअवं वन्दामो । भगवन्, वन्दावहे ।

**नन्दी**— के युवाम्, किन्निमित्तं वा पुष्पावचयमाचरथ ।

**उभे**— अह्मे हिमवदस्स कण्णाए गौरीए पिअसहीओ । तवच्चचरणणिअमट्ठिदाए ताए देवपूआपुप्फाइं अवचिणुमो ।

आवां हिमवतः कन्यायाः गौर्याः प्रियसख्यौ । तपश्चरणनियमस्थितायास्तस्याः देवपूजापुष्पाण्यवचिनुवः ।

**नन्दी**— किंनिमित्तं वा तपस्तस्याः ।

**जया**— अणुरूवं वरं लहेअं त्ति । अनुरूपं वरं लभेयेति ।

**नन्दी**--कोऽसावनुरूपो वरः ।

**जया**—

जं किल भणन्दि वेआ णिच्चजुवाणं पुराणपुरिसं च ।
जो किल धारइ णिच्चं ईस्सरसद्दं च चन्दलेहं च ॥ ३ ॥

यं किल भणन्ति वेदा नित्ययुवानं पुराणपुरुषं च ।
[1]यः किल धारयति नित्यमीश्वरशब्दं च चन्द्रलेखां च ॥

एसा णो प्पिअसही तं जेव्व परमेस्सरं पइं अहिलसन्दी महिन्दप्पमुहं लोअपालं अवमण्णिअ तवच्चरणं करेइ । किं च मम्महदाहिविरहादो पिदुणो घरं प्पविसिअ बलिअं उक्कण्ठिदा आसी ।

एषा नौ प्रियसखी तमेव परमेश्वरं पतिमभिलषन्ती महेन्द्रप्रमुखान् लोकपालानवमान्य तपश्चरणं करोति ।

---

१. यः किलेत्यादि ।

अणिमादिगुणोपेतमस्पृष्टपुरुषान्तरम् ।
शब्दमीश्वर इत्युच्चैः सार्द्धचन्द्रं बिभर्ति यः ।"

इति कुमारसंभवः ।

किं च मन्मथदाहिविरहात्पितुर्गृहं प्रविश्य बलवदुत्कण्ठितासीत् ।

**नन्दी**— तत्कथम्, उच्यताम् ।

**जया**—

पाण्डुक्खामसरीरा झत्ति णमन्तवअणसरसिरुहा ।
क्खीणा पव्वइणलिणी पसुपइणो विरहगिह्मेण ॥ ४ ॥

पाण्डुक्षामशरीरा झटिति नमद्वदनसरसिरुहा ।
क्षीणा पार्वतीनलिनी पशुपतेर्विरहग्रीष्मेण ॥

**नन्दी**— ततः परं कथमासीद्वां प्रियसखी ।

**जया**— अदो वरं सुणु । अतः परं शृणु ।

चन्दं वारइ चन्दणद्दिपवणप्पस्सं ण संमण्णइ
सज्जं पल्लवकप्पिदं ण सहई चन्दाअवं णिन्दइ ।
णो वा पोम्मपलासणिम्मिअथणप्पावारअं खम्मइ
सा णीहारसिलाअले सुणु वरं तावादुरा वट्टइ ॥ ५ ॥

चन्द्रं वारयति चन्दनाद्रिपवनस्पर्शं न संमन्यते
शय्यां पल्लवकल्पितां न सहते चन्द्रातपं निन्दति ।
नो वा पद्मपलाशनिर्मितस्तनप्रावारकं[1] क्षाम्यति
सा नीहारशिलातले शृणु परं तापातुरा वर्तते ॥

**नन्दी**— एवं प्रबलमदनज्वरा सा पश्चात्किं कृतवती ।

**उभे**— पच्छा कं वि उवाअं अपेक्खन्ती तवच्चरणेहिं परमेस्सरं अहिमुहीकादुं पउत्ता तहा तिव्वणिअमं करेइ ।

---

१. स्तनप्रावारकं = स्तनोत्तरीयम् ।

पश्चात्कमप्युपायमपश्यन्ती तपश्चरणैः परमेश्वरमभिमुखीकर्तुं प्रवृत्ता तथा तीव्रनियमं करोति ।

**नन्दी**— कथय, कीदृक् पशुपतेरस्यामनुरागः ।

**जया**— अण्णोण्णं पुण सुमहन्तो अणुराओ । अदो वरं सो एव्व जाणाइ ।

अन्योन्यं पुनस्सुमहाननुरागः । अतः परं स एव जानाति ।

**नन्दी**— तत्किमनेन संदिग्धफलेन दुर्लभवस्तुप्रार्थनानिर्बन्धेन । देवेष्वियं यं कंचिदनुरूपं वरं वृणीताम् । अयं पुनः खण्डपरशुरग्रणीरेव वीतरागाणाम् । तद्बुद्धिमुपदिशतां भवत्यौ प्रियसख्याः ।

**जया**— भअवं, एव्वं अह्माणं प्पिअसहीए व्ववसिदं जहा परमेस्सरं एव्व पइं लहेअम् । अण्णहा अत्थ एव्व सिहरे कठिणेहिं तवच्चरणेहिं विलीणा भवेअं त्ति ।

भगवन्, एतदस्माकं प्रियसख्या व्यवसितं यथा परमेश्वरमेव पतिं लभेय । अन्यथात्रैव शिखरे कठिनैस्तपश्चरणैर्विलीना भवेयमिति ।

**नन्दी**— (आत्मगतम् ।) श्रुतं श्रोतव्यम् । तमिमं वृत्तान्तं नीललोहिताय निवेदयामि । (प्रकाशम्) भद्रे, यथागतं गमिष्यामि । (इति निष्क्रान्तः ।)

**जया**— अम्हे वि प्पिअसहीए पूआपुप्फाइं उवहरामो ।

आवामपि प्रियसख्याः पूजापुष्पाण्युपहरावः ।

[इति निष्क्रान्ते ।

इति मिश्रविष्कम्भकः ।

( ततः प्रविशति [1]नैष्ठिकभूमिकावलम्बी शङ्करः । )

**शङ्करः—** ( आत्मानं निर्वर्ण्य । ) पर्याप्तेयं भूमिका पार्वतीं प्रतारयितुम् । तथाहि ।

[2]अंसे कृष्णाजिनश्रीस्त्रिगुणविरचिता मेखला श्रोणिभागे
पाणावाषाढदण्डो भसितविरचितं पुण्ड्रकं भालदेशे ।
दर्भैः क्लृप्तं पवित्रं श्रवसि [3]परिणमन्मातुलुङ्गीपिशङ्गी
मौलौ पङ्क्तिर्जटानां जपवलयमिदं स्फाटिकं च प्रकोष्ठे ॥६॥

( विचिन्त्य । )

यत्सा मन्मथमोहनास्त्रसमये सापत्रपा चारुणा
वक्त्रेण स्मितफुल्लगण्डफलकं व्रीडाविलोलेक्षणं ।

---

१. नैष्ठिकः = निष्ठा आमरणं ब्रह्मचर्येण वर्तिष्ये इत्येवं निश्चयः यस्यास्ति सः । "आजीवब्रह्मचारी यो नैष्ठिकस्स निगद्यते ।"

२. अंस इत्यादि । "हारिणमैणेयं वा कार्ष्णं ब्राह्मणस्य" इति, "ऐणेयेनाजिनेन ब्राह्मणं" इति चापस्तम्बाश्वलायनौ । "मौञ्जी मेखला त्रिवृद्ब्राह्मणस्य" इत्यापस्तम्बः "ब्राह्मणो बैल्वपालाशौ" इति मनुः ।

३. परिणमन्मातुलुङ्गीपिशङ्गी = परिणमन्ती परिपक्वा या मातुलुङ्गी मातुलुङ्गीफलं तद्वत् पिशङ्गी कपिलवर्णा ।

"अथाजिनाषाढधरः प्रगल्भवाक्
ज्वलन्निव ब्रह्ममयेन तेजसा ।
विवेश कश्चिज्जटिलस्तपोवनं
शरीरबद्धः प्रथमाश्रमो यथा ॥"

इति कुमारसम्भवः ।

उन्मीलत्पुलकाङ्कुरं स्थितवती प्राप्तेव रूपान्तरं
तन्वी तत्पुनरद्य चेतसि मम प्रादुर्भवत्यञ्जसा ॥ ७ ॥

तदिदानीमेव गाढतरतरणिकिरणपरिक्लान्तामिव मेदिनीं मेघः कठिनतपोविशेषतप्तामभ्युपपत्स्ये[1]। यद्येवं जयाविजयाभ्यां निवेदितो भावबन्धस्तस्या नन्दिना मह्यमर्पितः, तदात्मानमपरक्त मिवावधारयामि । ( इति सविनयं परिक्रामति । )

(ततः प्रविशति जयाविजयाभ्यामन्वास्यमाना तपस्यन्ती पार्वती ।)

**पार्वती**— (वामाक्षिस्पन्दनं सूचयित्वा ।) हला प्पिअसहिओ,
हला प्रियसख्यौ,

आणन्दवाहसिसिरं अकारणं फुरइ लोअणं वामम् ।
मह मन्दभाइणीए जाअइ एदस्स अज्ज किं णु फलम् ॥ ८ ॥
आनन्दवाष्पशिशिरमकारणं स्फुरति लोचनं वामम् ।
मम मन्दभागिन्या जायते एतस्याद्य किं नु फलम् ॥

**जया**— हला पव्वइ, इत्थिआणं वामक्खिचलणं पुरिसाणं दक्खिणक्खिचलणं सुसउणं त्ति पउराणिआ भणन्दि । तहा मम्महदाहणिक्करुणो वि परमेस्सरो कस्स वि मुणिणो मुहेण तुमं अणुगिण्हिस्सदि ।

सखि पार्वति, स्त्रीणां वामाक्षिचलनं पुरुषाणां दक्षिणाक्षिचलनं सुशकुनमिति पौराणिका भणन्ति । तथा मन्मथदाहनिष्करुणोऽपि परमेश्वरः कस्यापि मुनेर्मुखेन त्वामनुग्रहीष्यति ।

---

१. अभ्युपपत्स्ये = अनुग्रहीष्यामि ।

**पार्वती**— सच्चं होदु प्पिअसहीए वअणम्।

सत्यं भवतु प्रियसख्या वचनम्।

**विजया**— सच्चं भणिदं सहीए जआए।

सत्यं भणितं सख्या जयया।

**शंकरः**— (पार्वतीं दृष्ट्वा।)

केदं तपः कठोरं केदं सुकुमारमङ्गमबलायाः।

दिवसः कुत्र घनोष्मा कुत्र कला कमलकोमला चान्द्री॥९॥

अहो महान्तं तपःक्लेशमनुभवति मामुद्दिश्य मञ्जुभाषिणी।

**जया**— (विलोक्य।) हला पव्वइ, गहिअतणू विअ पुढमस्समो जुवा को वि महापुरिसो इदोमुहो आअच्छइ।

सखि पार्वति, गृहीततनुरिव प्रथमाश्रमो युवा कोऽपि महापुरुष इतोमुख आगच्छति।

**पार्वती**— आअदाणं अदिहीणं तुम्हेहिं अच्चणा कादव्वा। अहं उण जहापुव्वं णिअमं अणुचिट्ठामि।

आगतानामतिथीनां युवाभ्यामर्चना कर्तव्या। अहं पुनर्यथापूर्वं नियममनुतिष्ठामि।

(इति मौनमवलम्बते।)

**शंकरः**— (निर्वर्ण्य।)

आभाति वल्कलवती पाण्डुक्षामा मदीयविरहेण।

प्रतिपत्कलेव चान्द्री संध्याशकलेन संवीता॥ १० ॥

(इति समीपमुपसर्पति। जयाविजये विष्टरमुपनयतः। शंकरः उपविश्य मार्गखेदं नाटयति। पार्वती सख्यौ विलोकयति। सख्यौ वर्णिनं तालवृन्तेन वीजयतः।)

**शंकरः**— (हस्तमुद्यम्य ।) गतः श्रमोऽस्माकमनन्यसामान्येन भवतीनां सौजन्येन ।

**उभे**— (सविनयम्) कुदो आअच्छादि महापुरिसो ।

कुत आगच्छति महापुरुषः ।

**शंकरः**— अद्य कैलासादागम्यते ।

**जया**— जइ एव्वं अग्घं पडिगेण्हादु महापुरिसो ।

यद्येवमर्घ्यं प्रतिगृह्णातु महापुरुषः ।

**शंकरः**— तथा (इत्यर्घ्यप्रतिग्रहं रूपयित्वा ।) भद्रे, एकं प्रष्टुमभिलषामो भवत्या ।

**जया**— पुच्छदु महापुरिसो ।

पृच्छतु महापुरुषः ।

**शंकरः**— कस्येयं दुहिता, के भवत्यौ, किंनिमित्तं वा कठोरे तपसि वर्तते ।

**जया**— एसा णो प्पिअसही हिमवदस्स कण्णआ पव्वईणामहेआ । अम्हे वि से प्पिअसहीओ जआविजए । अणुरूववरलाहणिमित्तं अ से तवच्चरणम् ।

एषा नौ प्रियसखी हिमवतः कन्यका पार्वतीनामधेया । आवामप्यस्याः प्रियसख्यौ जयाविजये । अनुरूपवरलाभनिमित्तं चास्यास्तपश्चरणम् ।

**शंकरः**—

जन्मान्ववाये प्रथमस्य धातुः
पिता गरीयान्गिरिसार्वभौमः ।
वपुर्मनोहारि वचश्च रम्यं
पदं च लोकादतिलोकमस्याः ॥ ११ ॥

तत्किमनया प्रार्थनीयो वरस्त्रिलोक्याम् ।

**जया**— अत्थि को वि महापुरिसो ।
अस्ति कोऽपि महापुरुषः ।

**शंकरः**— कोऽसावात्मसौभाग्यविशेषदुर्विदग्धः कठिनहृदयः ।

**जया**— महापुरिस, सुणाहि दाव । ( ' जं किल भणन्ति वेआ ' इत्यादि पठित्वा ।) तं एव्व परमेस्सरं अहिलसन्दी णो प्पिअसही तवोणिअमं अनुचिट्ठइ ।

महापुरुष, शृणु तावत् । तमेव परमेश्वरमभिलषन्ती नौ प्रियसखी तपोनियममनुतिष्ठति ।

---

१. जन्मेत्यादि ।

" कुले प्रसूतिः प्रथमस्य वेधसः
त्रिलोकसौन्दर्यमिवोदितं वपुः ।
अमृग्यमैश्वर्यसुखं नवं वयः
तपःफलं स्यात्किमतःपरं वद ॥ "

इति कुमारसंभवः ।

२. आत्मसौभाग्य ...... ।

" अवैमि सौभाग्यमदेन वञ्चितं तव प्रियं । "

इति कुमारसंभवः ।

शंकरः— (पार्वतीं प्रति ।) भद्रे, अपि सत्यमेतत् ।

पार्वती— (मौनमुन्मुच्य ।) महापुरिस, जहा आअक्खिदं सहीहिं तहा मे मणोरहो ।

महापुरुष, यथाख्यातं सखीभ्यां तथा मे मनोरथः ।

शंकरः— (आत्मगतम् ।) इदानीमात्मनिन्दनैरपि अविचालि चित्तमस्याः परीक्षिष्ये । (प्रकाशं । सहस्ततालं प्रहस्य ।)

[1]आलेपो भसितं विभूषणमहिर्वासः पितॄणां वने
वेतालाः परिचारकाः प्रतिदिनं वृत्तिश्च भिक्षामयी ।
इत्थं यस्य शुभेतराणि चरितान्याख्यान्ति सर्वे जना-
स्तस्मिन्मौग्ध्यवशान्मतिस्तव रुचिं बध्नाति किं ब्रूमहे ॥१२॥

अन्यच्च ।

जगत्त्रयीलोचनवालचन्द्रिका
कुलस्य रत्नं भवती क्व भूभृतः ।
क्व कृत्तिवासाः पितृकानने वस-
न्नमङ्गलाचाररतिस्त्रिलोचनः ॥ १३ ॥

पार्वती— (कर्णौ पिधाय ।) सन्तं पावं, सन्तं पावम् ।

शान्तं पापम्, शान्तं पापम् ।

---

१. आलेप इति ।

"श्मशानचारी सततं व्यालाभरणभूषितः ।
निन्दितस्सर्वलोकेषु स कथं वाञ्छ्यते त्वया ।
चिताभस्मविलिप्ताङ्गं वातुलं जटिलं हरम् ॥"

इति शिवपुराणम् ।

**शंकरः**— यद्येवं ते दृढतरो मनसि निश्चयस्तर्हि ।

विधुंतुदं चान्द्रमसी यदि कामयेत कला ।
वरं वृणीताद्भवती संप्रत्येव पिनाकिनम् ।। १४ ।।

**पार्वती**— (मुखवैवर्ण्यं रूपयित्वा ।)

जं कुव्वन्ति खु णिअमा सअला अवि मउलिणा णमक्कारम् ।
तं गिरिसं णिन्दन्तो किं णु तुह जिहा ण होइ णिब्भिण्णा ।। १५ ।।

[1]यं कुर्वन्ति खलु निगमास्सकला अपि मौलिना नमस्कारम् ।
तं गिरिशं निन्दतः किं नु तव जिह्वा न भवति निर्भिन्ना ।।

हला सहि, महापुरिसाणिन्दाकालिणं ण तारिसं पावं जारिसं सुणंदाणम् । एस उण बम्हणो इस्सरणिन्दाणिरङ्कुसमुहो ता अण्णदो सरामो । (इति विस्रंसमानवल्कलमन्यतः परावर्तते ।)

हला सखि, [2]महापुरुषनिन्दाकारिणां न तादृशं पापं, यादृशं शृण्वतां । एष पुनर्ब्राह्मण ईश्वरनिन्दानिरङ्कुशमुखस्तदन्यतः सरामः ।

---

१. यमिति ।

यमुद्दिश्य नमस्कारं कुर्वन्तीत्यर्थः ।

२. महापुरुषेत्यादि ।

वार्यतामालिविप्रोऽयं महद्दूषणभाषकः ।
न केवलं पापभागी श्रोता वैस्यान्नसंशयः ।

इति ब्रह्मपुराणम् ।

**शंकरः**— (स्वरूपं प्रकाश्य ।)

**परिणाहि स्तनयुगलं कृशमवलग्नं क्षमेत किं गिरिजे ।**
**तव हस्तदानचतुरस्तपसा हि कृतोऽयमस्मि दासजनः ॥१६॥**

(इति पार्वत्या हस्तमवलम्बते । पार्वती सभयविस्मयप्रहर्षा पुलकिततनुः प्रस्विन्नगण्डा प्रतिपत्तिमूढा तिष्ठति ।)

**जया**— पिअं णो, प्पिअं णो । सण्णिहिदो परमेस्सरो अम्हाणं सक्कम्मपरिणामेण ।

(प्रियं नः, प्रियं नः । संनिहितः परमेश्वरोऽस्माकं सत्कर्मपरिणामेन ।)

**शंकरः**—

**आविःश्रमाम्बुकणिकामङ्गलतां गाढमङ्कुरत्पुलकाम् ।**
**मण्डितपयोधरान्तामालिङ्ग्य कृती भवाम्यहं गिरिजे ॥१७॥**

**तदिमां गान्धर्वेण विवाहेन पाणौ कर्तुमभिलषामि ।**

---

१. परिणाहीत्यादि । "रम्भोरु संहर भयं क्षमते विकारमुत्काम्पिनः स्तनतटस्य न मध्यभागः ।" इति मालतीमाधवम् ।

२. "क्रीतस्त्वयाहं दासोऽयं घोरेण तपसामुना ।"
इति शिवपुराणम् ।

३. गान्धर्वेणेति ।
"गान्धर्वेण विवाहेन ।" इति शाकुन्तलम् ।
"इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वस्सतु विज्ञेयो मैथुन्यः कामसंभवः ॥"
इति तल्लक्षणम् ।

**या**— भअवं, अम्हाणं पत्थणा तुए कादव्वा। जहा सअलकुलाचलचक्कवट्टिणो तादस्स हिमवदस्स घरणिम्मिअविवाहकज्जे उवट्ठिअ इमं पडिच्छ ।

भगवन्, अस्माकं प्रार्थना त्वया कर्तव्या । यथा सकलकुलाचलचक्रवर्तिनस्तातस्य हिमवतो गृहनिर्मितविवाहकार्ये उपस्थायेमां प्रतीच्छ ।

**शंकरः**— ( सनिर्वेदमात्मगतम् । ) इतःपरं कथमिमां विहाय वर्तिष्ये । ( प्रकाशम् । ) भवतु । लोकयात्रा न हातव्या ।

**जया**— पञ्चसदिवसब्भन्तरे जहा विवाहमङ्गलं हुविस्सदि तहा करीअदु ।

पञ्चषदिवसाभ्यन्तरे यथा विवाहमङ्गलं भविष्यति तथा क्रियताम् ।

**शंकरः**— त्रिचतुरदिवसाभ्यन्तर इति वक्तव्यम् । तथाहि ।

**क्षणमपि विरहे मम प्रियायाः**
**कलयति कल्पसहस्रकोटिसाम्यं**
**कतिपयदिवसप्रयोगमेनं**
**कथमिव हन्त सहिष्यते मनो मे ॥ १८ ॥**

( पाणिं मुञ्चति । )

---

१. क्षणमपीति । मे मनः कर्तृ, क्षणमपि कल्पसहस्रकोटिसमं मन्यते । कल्पसहस्रकोटिभिः साम्यं सादृश्यं यस्य तमिति बहुव्रीहिः । एनं कतिपयदिनप्रयोगं = कतिपयदिवसबोधकं पञ्चषदिवसेति पदप्रयोगं ।

**जया**-- अह्मे गच्छम्मो विवाहमङ्गलं संवादेदुम् ।

वयं गच्छामो विवाहमङ्गलं संपादयितुम् ।

**शंकरः**-- तथा क्रियताम् । वयमपि सप्तर्षीन्विवाहमङ्गलाय प्रेषयितुं गमिष्यामः ।

[इति निष्क्रान्तास्सर्वे ।

## इति चतुर्थोऽङ्कः ।

---

१. सप्तर्षीनिति । "मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्चेति सप्तैते लोके सप्तर्षयस्स्मृताः ॥"



## पञ्चमोऽङ्कः ।

(ततः प्रविशति कञ्चुकी ।)

**कञ्चुकी**— आज्ञप्तोऽस्मि सकलकुलाचलचक्रवर्तिना हिमवता । यथा 'शिलाधर, पूर्वेद्युरेव परमेश्वरप्रहिताः सारुन्धतीकाः सप्तर्षयः समागत्य लब्धवराया वत्साया दिनमिदं विवाहमङ्गलयोग्यमकल्पयन् । तद्भवता चौषधिप्रस्थवासिनः पौराः पुरं परिष्क्रियतामिति नियोक्तव्याः' इति । तत्प्रभोर्नियोगमनुतिष्ठामि । (इति परिक्रम्य सर्वतो विलोक्य ।) भो भोः पौराः,

संनह्यन्तां विचित्राः प्रतिभवनमिह श्रेणयस्तोरणाना-
मुन्नम्यन्तां समन्ताद्गगनतललिहः केतनानां पताकाः ।
संसिच्यन्तां पटीरद्रवभरितजलैर्वीथयो मुक्तपुष्पाः
संप्राप्तोऽसावुमायाः परिणयदिवसो विश्वमाङ्गल्यहेतुः ॥१॥

(आकाशे ।) किं ब्रूथ, 'भवद्वचनात्प्रागेव सर्वमस्माभिर्द्विगुणमाचरितम्' इति । (सर्वतो निर्वर्ण्य सहर्षम् ।) अहो, अस्मदादेशात्प्रागेव प्रवृत्तमहोत्सवं नगरम् । तथाहि ।

एषा वन्दनमालिका विरचिता चूतप्रवालैर्नवै-
रम्भास्तम्भपरिष्कृतेषु भवनद्वारेषु संलक्ष्यते ।

---

१. वन्दनमालिका ।

"मङ्गल्यं दाम वन्दनमालिका ।" इति हेमचन्द्रः ।

२. रम्भा ...... ।

"द्वारिद्वारि निवेशयन्तु कदलीस्तम्भान्विनम्रान्फलैः ।"

इति जानकीपरिणयम् ।

आमन्द्रध्वनयः क्वणन्ति मुरजा मूर्च्छन्ति तन्त्रीस्वनाः
शिञ्जानैर्मणिभूषणैस्तत इतो नृत्यन्ति वाराङ्गनाः ॥२॥

इतश्च ।

उत्सर्पदागरवधूपपरम्पराभिः
प्रादुर्भवत्यभिनवो जलदागमोऽयम् ।
उन्नद्धतोरणमाणिप्रभया स्फुरन्त्या
संजायते च शतमन्युशरासनश्रीः ॥ ३ ॥

अन्यतश्चामूः ।

धवलारुणमेचकैरपाङ्गै-
रपरामारचयन्ति रङ्गवल्लीम् ।
कुचयोर्युगलेन पूर्णकुम्भा-
त्पुनरुक्तानिव कुर्वते मृगाक्ष्यः ॥ ४ ॥

(सर्वतोऽवलोक्य ।)

विक्षिप्तः सरभसमेव पौरलोकै-
र्विस्फूर्जत्कनकरजःपिशङ्गदीप्तिः ।
प्रत्यग्रद्युमणिमयूखजालशोभा-
माधत्ते दिशि दिशि कौङ्कुमः परागः ॥ ५ ॥

तदिमं प्रवर्तमानं पुरपरिष्कारं प्रभवे निवेदयामि ।

---

१. आगरवाः = अगरु संबन्धिनः ।

२. रङ्गवल्लीं = भक्तिरचनां । कोलं इति द्राविडभाषा ।

(ततः प्रविशति विवाहस्थानमधिवसन्हिमवान् ।)

**हिमवान्—**

पूर्वं नारदसूचनेन महता चन्द्रार्धचूडामणि-
जामातेत्यभवत्पुनस्तदनु तत्संप्राप्तिराकाङ्क्षिता ।
लब्धोऽसौ तपसा मया दिनमिदं तस्याश्च वैवाहिकं
जातो विघ्नगणानतीत्य कृतिनामद्याहमग्रेसरः ॥ ६ ॥

**शिलाधरः—** (उपेत्य ।) जयतु स्वामी ।

**हिमवान्—** शिलाधर, किं पुरपरिष्कारः प्रवर्तितो भवता ।

**शिलाधरः—** स्वामिन्, अस्मदीयोऽयमुत्सव इति प्रत्येकं पौराणामभिमानः ! कथं परिहीयते पुरपरिष्कारः । सर्वं द्विगुणमाचरितं पौरैः ।

**हिमवान्—** शिलाधर, किं सर्वे पर्वताः पार्वतीपरिग्रहणमङ्गलं द्रष्टुमागताः ।

**शिलाधरः—** स्वामिन्, अवधार्यताम् ।

[1]भूपङ्केरुहकर्णिकायिततनुर्मेरुस्सुराणां प्रियो
[2]योक्त्रीभूतभुजङ्गराजफणास्निग्धोपलो मन्दरः ।
विन्ध्यो व्योमनि भानुमालिपदवीजङ्घालशृङ्गावलिः
साकं संप्रति गन्धमादनमुखैस्त्वां द्रष्टुमभ्यागताः ॥ ७ ॥

---

१. भूपङ्केरुह ...... ।
"जम्बूद्वीपारविन्दे कनकगिरिरसावश्नुते कर्णिकात्वं ।"
इति शलाकापुरुषचरितप्रशस्तिः ।

२. योक्त्रीभूतः = मन्थरज्जुभूतः ।

**हिमवान्** — अथ कैलासः किं करोति ।

**शिलाधरः**— स्वामिन्, स खलु जामातृपक्षस्थस्तेनैव सार्धमागमिष्यति ।

**हिमवान्**— युज्यते । अथ विश्वावसुप्रभृतय आगता गन्धर्वाः ।

**शिलाधरः** —

**आतोद्यपाणयः सर्वे गन्धर्वाः सवधूगणाः ।**
**उपवीणयितुं[1] प्राप्ता मानयन्तस्तवोत्सवम् ॥ ८ ॥**

**हिमवान्**— आगताः किमप्सरसः सार्धममरैः ।

**शिलाधरः**— श्रूयताम् ।

**विद्युद्वल्लीवितानव्यतिकरसुषमां व्योम्नि विस्तारयन्त्यः**
**कान्त्या नीलोत्पलानां श्रियमिव नयनैर्दिङ्मुखे दर्शयन्त्यः ।**
**ज्योत्स्नालक्ष्मीं दिवापि स्मितरुचिविसरैर्विष्वगुत्पादयन्त्यः**
**सर्वाः स्वर्वारयोषाः सममरगणैरागताः प्रीतये नः ॥ ९ ॥**

**हिमवान्**— शिलाधर, यद्येवमन्तःपुरं गत्वा भवान्कुलवृद्धां कौशिकीं पुरस्कृत्य समागताभिरप्सरोभिर्वत्सा पार्वती सम्यगलंक्रियतामित्यभिधत्ताम् । अलंक्रियाप्रकारं च कौशिकी समागत्य मह्यमाचष्टाम् । किंचागतानां वधूनां गिरीणां च सत्कृतये तत्रभवता संविधातव्यः सकललोकवस्तुसंभारः ।

---

१. उपवीणयितुं = वीणया उपगातुं ।

**शिलाधरः**— यथादिष्टं स्वामिना तथा सर्वं संपादयिष्यामि ।

[इति निष्क्रान्तः ।

( प्रविश्य । )

**नारदः**—

प्राज्ञया यदुपक्रान्तं कार्यं गुरु दिवौकसाम् ।
अन्तरायानतिक्रम्य तद्धि सिध्यति सांप्रतम् ॥ १० ॥

( इति परिक्रम्यावलोक्य च । ) अयमध्यास्ते विवाहमण्डपं हिमवान् । तदेनमुपसर्पामि । ( इत्युपसर्पति । )

**हिमवान्**— ( विलोक्य । ) अये, नारदः । ( अञ्जलिं बध्नाति । )

**नारदः**— हिमवन्, अभ्युदयः खलु तत्रभवतः ।

**हिमवान्**— भवदुपक्षिप्तस्य फलमिदं बीजस्य । ( इत्यासनमुपनयति । नारदः उपविशति । )

( ततः प्रविशति कौशिकी । उपविश्य पार्वत्याः परिकर्मप्रकारं अभिनिर्दिशति । )

**हिमवान्**— किमलंकृता वत्सा ।

**कौशिकी**— भगवन्, कथयामि । श्रूयताम् ।

**हिमवान्**— अवहितोऽस्मि ।

**कौशिकी**—

असमग्रभूषणायास्तनुतरकौशेयवसनधारिण्याः ।
आलिप्तमङ्गमखिलं तैलेन सुगन्धिना तस्याः ॥ ११ ॥

**हिमवान्**— ततस्ततः ।

**कौशिकी—**

मणिपीठवर्तिनीं तां मङ्गलशङ्खेषु मन्द्रघोषेषु ।
अम्भोभिरमरनद्याः सखीजनो विहितमज्जनां व्यतनोत् ॥१२॥

**हिमवान्**— ततस्ततः ।

**कौशिकी—**

मङ्गलमज्जनविशदा कर्पूरक्षोदपाण्डुरं क्षौमम् ।
साऽधत्त जलदधौता द्यौरिव शरदिन्दुचान्द्रिकोद्भेदम् ॥१६॥

**हिमवान्**— ततस्ततः ।

**कौशिकी—**

चरणकमलं तदीयं लाक्षाबालातपेन संवलितम् ।
अध्यास्त भृङ्गमाला वलभिन्मणिखचितनूपुरव्याजात् ॥१४॥

**हिमवान्**— ततस्ततः ।

**कौशिकी—**

बद्धा मणिमयकाञ्ची तस्याः परिणाहशालिनि नितम्बे ।
पङ्क्तिरिव सारसानां सुरसरितः पुलिनमण्डलाभोगे ॥१५॥

---

१. मणिपीठ ...... ।

विन्यस्तवैडूर्यशिलातलेऽस्मिन्
आबद्धमुक्ताफलभक्तिचित्रे ।
आवर्जिताष्टापदकुम्भतोयैः
सतूर्यमेनां स्नपयाम्बभूवुः ॥ ”

इति कुमारसंभवः ।

२. वलभिन्मणयः – इन्द्रनीलरत्नानि ।

**हिमवान्**— ततस्ततः।

**कौशिकी**—

हारलता परिणद्धा कुचकलशे कुङ्कुमारुणे तस्याः।
सिन्दूरिते करिपतेः कुम्भे नक्षत्रमालेव[1] ॥ १६ ॥

**हिमवान्**— ततस्ततः।

**कौशिकी**—

कमनीयतानिवासः कण्ठस्तस्या विचित्रमणिभूषः।
सविधप्रसूनरत्नं शङ्खनिधिं दूरमत्यकरोत् ॥ १७ ॥

**हिमवान्**— ततस्ततः।

**कौशिकी**—

मुक्ताताटङ्कयुगं प्रतिमुक्तं कर्णपाशयो[2]रस्याः।
मुखममलमिव निषेवितुमागतममृतांशुबिम्बयुगम् ॥ १८ ॥

**हिमवान्**— ततस्ततः।

**कौशिकी**—

आयामिनोस्तदक्ष्णोरञ्जनलेखाविधिं वितन्वत्याः।
पाणिः प्रसाधिकायाः प्रापदपाङ्गं चिरेण विश्रम्य ॥ १९ ॥

---

१. नक्षत्रमाला = सप्तविंशतिमौक्तिका माला।

२. कर्णपाशयोः = अतिसुन्दरयोः कर्णयोः। पाशस्तु मृगपक्ष्यादिबन्धने। कर्णान्ते शोभनार्थः स्यात्कचान्ते निकरार्थकः। छात्राद्यन्ते च निन्दार्थः।'' इति हेमचन्द्रः।

**हिमवान्**— ततस्ततः ।

**कौशिकी**—

तस्या ललाटसीमनि चन्दनपङ्केन मेनया लिखितम् ।
आसीत्सितातपत्रं तिलकमनङ्गस्य दर्शितच्छायम् ॥ २० ॥

**हिमवान्**— ततस्ततः ।

**कौशिकी**—

आगुल्फलम्बमस्याः कुन्तलमन्तर्निगूढमन्दारम् ।
संयम्य चतुरबन्धं सखीजनः स्तिमितनेत्रमास्त चिरम् ॥२१॥

**हिमवान्**— ततस्ततः ।

**कौशिकी**—

अङ्गं भूषणनिकरो भूषयतीत्येष लौकिको वादः ।
अङ्गानि[1] भूषणानां कामपि सुषमामजीजनंस्तस्याः ॥२२॥

**हिमवान्**— यद्येवं तत्सम्यगलंकृता वत्सा भवत्याः संनिधिविशेषेण ।

( नेपथ्ये । )

भ्राम्यन्मन्दरकन्दराहतिचलत्क्षीरोदपूरोदर-
स्फूर्जद्वीचिपरम्पराकलकलप्राचण्ड्यवैतण्डिकः ।
निर्घोषैः कुलशैलगह्वरगुहारन्ध्राणि वाचालय-
न्दिव्यः कश्चन दुन्दुभिः पटुरवः साटोपमाहन्यते ॥२३॥

( सर्वे ससंभ्रममाकर्णयन्ति । )

---

१. अङ्गमिति ।
"आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः ।
उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः ।"
इति विक्रमोर्वशी ।

(पुनर्नेपथ्ये ।)

जम्भारे भव पार्श्वतः परिसरेणायाहि लक्ष्मीपते
वेधः स्वस्त्ययनान्यधीष्व मुनयः प्रब्रूत रौद्रीमृचम् ।
चन्द्रार्कावपि चामरे विधुनुतं छत्रीभवाहीश्वर
प्रेष्ठा[1] रुद्रगणाः प्रयात पवन स्पन्दस्व मन्दोदयः ॥२४॥

**हिमवान्**— भगवन्नारद, कोऽयं देवानामिव कोलाहलः श्रूयते ।

**नारदः**— सकलजगदुत्पत्तिस्थितिप्रलयहेतुरुद्घुष्यमाणमहिमा चराचरगुरुस्ते जामाता चटुलं विवाहवेषमास्थाय सह देवगणैरित एवाभिवर्तते । अयं कलकलस्तत्पुरःसरस्य नन्दिनः प्रोत्सारणायाः । तद्भवानर्घ्यपाणिः प्रत्युद्यातु भगवन्तमिन्दुशेखरम् ।

(ततः प्रविशति गृहीतविवाहवेषः शंकरो देवलोकश्च ।)

**शंकरः**— (शार्ङ्गिणं प्रति ।) अमरावतीमतिक्रम्य शोभते पुरमिदमोषधिप्रस्थम् ।

**शार्ङ्गी**— किं परिहीयते महेन्द्रान्महीधरेन्द्रः ।

(हिमवानर्घ्यपाणिरुपसर्पति ।)

**शंकरः**— (अवलोक्य ।) अभ्युद्गच्छति मामचलाधिराजः । तद्वाहनादवरुह्य यास्यामः । (तथा करोति ।)

**हिमवान्**—
अचार्मणानामपि[2] दूरमक्ष्णा-
मकर्तृकाणां वचसामभूमिम् ।

---

१. प्रष्ठाः = अग्रगामिनः । "प्रष्ठोऽग्रगामिनि" इति पाणिनिः ।

२. अचार्मणानामिति ।
"नाभिपतती यच्चार्मणे चक्षुषी ।" इति अनर्घराघवम् ।

जामातरं लब्धुममुं गिरीशं
क्रियन्ति पुण्यानि मया कृतानि ॥ २५ ॥

(इत्युपसर्पति ।)

**शंकरः**— (विलोक्य ।)

अतिगुरुचरणक्रमैर्वितन्व-
न्नवनमितोन्नमितस्थलामिवोर्वीम् ।
विनयमुपदिशन्निवात्मभाजा-
मयमुपसर्पति मामगाधिराजः ॥ २६ ॥

(इत्यभिमुखमुपसर्पति । हिमवानर्घ्यमुपहरति । शंकरः सप्रणामं प्रतिगृह्णाति । हिमवान् सलज्जं मुखमवनमयति । जामातरं पुरस्कृत्य हरिविरिञ्चिमुखाः परिक्रामन्ति ।)

**ब्रह्मा**— हिमवन्, कुत्र वैवाहिकी वेदिः ।

**हिमवान्**— इत इतो भगवन्तः ।

(सर्वे उपसर्पन्ति ।)

**बृहस्पतिः**— हिमवन्, प्रत्यासन्नो मुहूर्तः । तदाहूयतां दुहिता ।

**हिमवान्**—(नेपथ्याभिमुखं परिवृत्य) वत्से इत इतः ।

(ततः प्रविशति जयाविजयाभ्यां सह पार्वती ।)

**पार्वती**— अज्ज क्खु मे मणोरहकप्पद्दुमो फलं दंसेइ ।
अद्य खलु मे मनोरथकल्पद्रुमः फलं दर्शयति ।

**जया**— (सस्मितम् ।) हला पव्वई, एत्तिअं तुह प्पिअसहिओ अह्मेवि जाआ ।
हला पार्वति, एतावत्तव प्रियसख्यौ आवामपि जाते ।

**पार्वती**— (सासूयम् ।) हला विजए, किं एसा भणइ ।

हला विजये, किमेषा भणति ।

**विजया**— हला पव्वइ, एसा सरसालावकुसलत्तणं दंसेइ ।

(इत्युपसर्पति ।)

हला पार्वति, एषा सरसालापकुशलत्वं दर्शयति ।

**ब्रह्मा**— (शार्ङ्गिणं प्रति ।) भगवन्, सर्वे देवाः सह भूतगणैर्यथास्थानमुपविशन्तु ।

(सर्वे तथा कुर्वन्ति ।)

**हिमवान्**— अस्मत्पक्षाः कुलपर्वताश्च कैलासेन समं वामपार्श्वे-उपविशन्तु ।

(कुलपर्वताश्च तथा कुर्वन्ति ।)

**शंकरः**— (पार्वतीं विलोक्य । आत्मगतम् ।)

**एषा विशेषरम्या विवाहवेषेण मोहनेन दृशोः ।**
**प्रतिभाति मानसे मे मदनसहस्राणि कल्पयन्तीव ॥२७॥**

**ब्रह्मा**— भोश्शंकर, वध्वा सहास्यां विवाहवेदिकायां प्राङ्मुखो वर्तेथाः ।

(शंकरः पार्वत्या सहोपविशति ।)

**शंकरः**— (आत्मगतम् ।)

**नन्दितनयनचकोरा नवनवलावण्यकौमुदीविसरा ।**
**उत्कूलयति मनो मे सैषा जलधिं कलेव चान्द्रमसी ॥२८॥**

**बृहस्पतिः**— (अग्निमुपसमाधाय ।) शंकर, त्वदीयेन पाणिना पार्वत्याः पाणिमवलम्बस्व ।

(शंकरस्तथा करोति । पार्वती पुलकोद्भेदमभिनयति ।)

**शंकरः**— (आत्मगतम् ।)

आभाति बालिकेयं पाणिस्पर्शेन पुलकितावयवा ।
अभिनववसन्तसङ्गादाविर्मुकुलेव बालचूतलता ॥ २९ ॥

**ब्रह्मा**— वधूवरौ, पावकं प्रदक्षिणीकुरुतम् ।

(उभौ तथा कुरुतः । पार्वती शंकरमवलोकयति । शंकरः प्रत्यवलोकयति । पार्वती दृष्टिं परावर्तयति ।)

**शंकरः**— (आत्मगतम् ।)

अवलोकनाय लोला दृष्टिरियं मृगदृशो निवृत्तिमती ।
गत्वा प्रतिप्रवाहं राजति शफरी निवर्तमानेव ॥ ३० ॥

(बृहस्पतिः पार्वत्याः पाणिना लाजाञ्जलिं कारयति । पार्वती धूमाक्रमणेन वैक्लव्यं निरूपयति ।)

**शंकरः**— (आत्मगतम् ।)

[1]प्रस्विन्नगण्डफलकच्युतपत्रलेखं
धूमाभिषङ्गगलिताञ्जनपाटलाक्षम् ।
म्लायद्वतंसकुसुमं मुखमायताक्ष्या-
श्चित्ते ममार्पयति कामपि रागमुद्राम् ॥ ३१ ॥

---

१. प्रस्विन्नगण्डफलकेति ।

"तदीयदार्द्रारुणगण्डलेख
मुच्छ्वासिकालाञ्जनरागमक्ष्णोः ।
वधूमुखं क्लान्तयवावतंस
माचारधूमग्रहणाद्बभूव ।"

इति कुमारसंभवः ।

**बृहस्पतिः**— ( शंकरं प्रति ) शंकर, पार्वत्याः पादकमलं पाणिभ्यामश्मानमारोपयतु भवान् ।

( शंकरः स्मयमानमुखस्तूष्णीं तिष्ठति । )

**कुलपर्वताः**— ( ससम्भ्रमम् । ) भगवन्, प्रमाणभूतेन पुरोधसा यदुच्यते तदनुष्ठीयताम् ।

**भूतगणाः**—(ससम्भ्रमम् ।) कुलपर्वताः, कथमिव नियम्यते त्रिभुवननियन्ता नीललोहितः ।

**ब्रह्मा**— (सस्मितमुभयान्निवार्य ।) सकलजननियामिका स्वतः प्रमाणभूता श्रुतिरिव सम्यगित्थमभिदधाति । तद्यथोक्तमनुष्ठीयताम् ।

(शंकरः संकुचिताभ्यां पाणिभ्यां पार्वत्याः पादकमलमश्मानमारोपयति ।)

(बृहस्पतिः कर्मशेषं समापयन्वधूवरौ ब्रह्माणं प्रणमयति ।)

**ब्रह्मा**— (हस्तमुद्यम्य ।)

**सकलजगतां सवित्रोरनन्यसामान्यमस्तु वां प्रेम ।**
**भुवनभयभङ्गदक्षो भवतु कुमारोऽपि तारकध्वंसी ॥३२॥**

(इत्याशिषं प्रयुङ्क्ते ।)

(प्रविश्य)

**वृद्धपुरन्ध्र्यः**—

अण्णोण्णसमसरीराणं अण्णोण्णप्परूढगाढपेम्माणं ।
जोण्हाणिसाअराणं तुम्हाणं होदु को वि अणुराओ ॥ ३३ ॥

---

१. श्रुतिरेव इत्यादि ।

" इममश्मानमारोहाश्मेव त्वं स्थिरा भव ।
सहस्व पृतनायतोऽभितिष्ठ पृतन्यतः ॥ "

इति श्रुतिः ।

अन्योन्यसमशरीरयोरन्योन्यप्ररूढगाढप्रेम्णोः ।
ज्योत्स्नानिशाकरयोर्युवयोर्भवतु कोऽप्यनुरागः ॥

(इत्यार्द्राक्षतारोपणमाचरन्ति ।)

**नारदः**— (उत्थाय साञ्जलिबन्धम् ।) भगवन्, देवकार्यहेतोः कृतापराधं कन्दर्पं पुनर्गृहीतवपुषं पदकमलसेविनं च भवाननुगृह्णातु ।

**शंकरः**— यथा रोचते तथा भवतु ।

(ततः प्रविशति रतिवसन्ताभ्यां सह पूर्वाकाराधिकविग्रहः कामः ।)

**सर्वे**—

माधुर्यसौरभतरङ्गितचापबाणः
सख्युः करं समवलम्ब्य शनैरनङ्गः ।
आयाति रुद्रनयनानलदग्धकायः
पूर्वाधिकः कथमहो ललनासमेतः ॥ ३४ ॥

(सर्वे विस्मयं रूपयन्ति ।)

**हिमवान्**— (सहर्षम् ।)

पुण्यैरेव पुरातनैरुपनतैर्देवेन विश्वात्मना
पुत्री भूरिगुणावदातचरिता पाणौ गृहीता मम ।
देवानां च मनोरथः परिणतः प्राप्यानवद्यं वपु-
र्लोकानन्दकरः स्मरोऽपि नयनातिथ्यं विधत्ते पुनः ॥

**ब्रह्मा**— किमतः परं ते प्रियमस्ति ।

---

१. रुद्रनयन ...... ।

"दग्धस्यापि त्रिपुररिपुणा सर्वलोकस्पृहार्हा
यस्याधिक्यं रुचिरतितरामङ्गनस्येव याता ।"

इति वात्स्यायनसूत्रसारः ।

**हिमवान्**— समधिगतसकलमनोरथानां नः किमतः परं प्रार्थनीयम्। तथापीदमस्तु भरतवाक्यम्।

पर्जन्यो वृष्टिमिष्टां प्रदिशतु जगतो भद्रसंपादयित्रीं
शश्वत्सस्यैः प्ररूढैर्भवतु पुलकिता सर्वतो भूतधात्री।
वर्धन्तां वीतविघ्नाः स्फुरदुपकृतयः संपदः सज्जनानां
नित्यानन्दो महेशो निरतिशयसुखप्राप्तये कल्पतां नः॥३६॥

[इति निष्क्रान्ताः सर्वे।

इति पञ्चमोऽङ्कः।

इति पार्वतीपरिणयं नाटकं संपूर्णम्॥



